10000

तैत्तिरीयारण्यकम् ।। हरिः ओम् ।।

10101

भ॒द्रं कर्णे॑भिः शृणु॒याम॑ देवाः । भ॒द्रं प॑श्येमा॒क्षभि॒र्यज॑त्राः ।

स्थि॒रैरङ्गै᳚स्तुष्टु॒वाꣳस॑स्त॒नूभिः॑ । व्यशे॑म दे॒वहि॑तं॒ यदायुः॑ ।

स्व॒स्ति न॒ इन्द्रो॑ वृ॒द्धश्र॑वाः । स्व॒स्ति नः॑ पू॒षा वि॒श्ववे॑दाः ।

स्व॒स्ति न॒स्तार्क्ष्यो॒ अरि॑ष्टनेमिः । स्व॒स्ति नो॒ बृह॒स्पति॑र्दधातु ।

आप॑मापाम॒पस्सर्वाः᳚ । अ॒स्माद॒स्मादि॒तोऽमुतः॑ । [1]

10102

अ॒ग्निर्वा॒युश्च॒ सूर्य॑श्च । स॒हस॑ञ्चस्क॒रर्धि॑या । वा॒य्वश्वा॑

रश्मि॒पत॑यः । मरी᳚च्यात्मानो॒ अद्रु॑हः । दे॒वीर्भु॑वन॒सूव॑रीः ।

पु॒त्र॒व॒त्त्वाय॑ मे सुत । महानाम्नीर्म॑हामा॒नाः । म॒ह॒सो म॑हस॒स्स्वः॑ ।

दे॒वीः प॑र्जन्य॒सूव॑रीः । पु॒त्र॒व॒त्त्वाय॑ मे सुत । [2]

10103

अ॒पाश्न्यु॑ष्णिम॒पारक्षः॑ । अ॒पाश्न्यु॑ष्णिम॒पारघ᳚म् । अपा᳚घ्रामप॑

चा॒वर्ति᳚म् । अप॑ दे॒वीरि॒तोहि॑त । वज्रं॑न्दे॒वीरजी॑ताꣳश्च । भुव॑नन्देव॒सूव॒रीः ।

आ॒दि॒त्यानदि॑तिन्दे॒वीम् । योनि॑नोर्ध्वमु॒दीष॑त । शि॒वान॒श्शन्त॑मा भवन्तु ।

दि॒व्या आप॒ ओष॑धयः । सु॒मृ॒डी॒का सर॑स्वति । मा ते॒ व्यो॑म स॒न्दृशि॑ ।[3]

10100

अ॒मुत॑स्सु॒तौष॑धयो॒ द्वे च॑ ।1।

10201

स्मृतिः॑ प्र॒त्यक्ष॑मैति॒ह्य᳚म् । अनु॑मानश्चतुष्ट॒यम् । ए॒तैरादि॑त्यमण्डलम् ।

सर्वै॑रे॒व विधा᳚स्यते । सूर्यो॒ मरी॑चि॒माद॑त्ते । सर्व॑स्मा᳚द्भुव॑नाद॒धि ।

तस्याः पाकवि॑शेषे॒ण । स्मृ॒तङ्का॑लवि॒शेष॑णम् । न॒दीव॒ प्रभ॑वात्का॒चित् ।

अ॒क्षय्या᳚थ्स्यन्द॒ते य॑था । [4]

10202

तान्नद्योऽभि स॑मायन्ति । सो॒रुस्सती॑ न नि॒वर्त॑ते । ए॒वन्ना॒नास॑मुत्था॒नाः ।

का॒लास्स॑व्वँथ्स॒रश्रि॑ताः । अणुशश्च म॑हश॒श्च । सर्वे॑ समव॒यन्त्रि॑तम् ।

स तैस्स॒र्वैस्स॑मावि॒ष्टः । ऊ॒रुस्स॑न्न नि॒वर्त॑ते । अधि सव्वँ॑थ्स॒रव्वि॒द्यात् ।

तदे॑व ल॒क्ष॒णे । [5]

10202

अणुभिश्च म॑हद्भि॒श्च । स॒मारू॑ढः प्र॒दृश्य॑ते । सव्वँ॑थ्सरः प्र॑त्यक्षे॒ण ।

ना॒धिस॑त्वः प्र॒दृश्य॑ते । प॒टरो॑ विक्लि॑धः पि॒ङ्गः । ए॒तद्व॑रुण॒लक्ष॑णम् ।
यत्रै॒त॑दुप॒दृश्य॑ते । स॒हस्रं॑ तत्र॒ नीय॑ते । एकꣳ हि शिरो ना॑नामु॒खे ।
कृथ्स्नन्त॑दृतु॒लक्ष॑णम् । [6]
10203
उभयतस्सप्तेँ॑न्द्रिया॒णि । ज॒ल्पित॑न्त्वेव॒ दिह्य॑ते । शुक्लकृष्णे
सव्वँ॑थ्सर॒स्य । दक्षिणवाम॑योः पा॒र्श्वयोः । तस्यै॒षा भव॑ति । शु॒क्रन्ते॑
अ॒न्यद्य॑ज॒तन्ते॑ अ॒न्यत् । विषु॑रूपे॒ अह॑नी॒ द्यौरि॑वासि । विश्वा॒ हि मा॒या
अव॑सि स्वधावः । भ॒द्रा ते॑ पूषन्नि॒ह रा॒तिर॒स्त्विति॑ । नात्र॒ भुव॑नम् ।
न पू॒षा । न प॒शव॑ः । नादित्यस्संवत्सर एव प्रत्यक्षेण प्रियत॑मव्वि॒द्यात् ।
एतद्वै सव्वँ॑थ्सरस्य प्रियत॑मꣳ रू॒पम् । योऽस्य महानर्थ उत्पथ्स्यमा॑नो भ॒वति ।
इदं पुण्यङ्कु॑रुष्वे॒ति । तमाहर॑णन्द॒द्यात् ।[7]
10200
य॒था॒ल॒क्ष॒ण ऋ॑तु॒लक्ष॑णं॒ भुव॑नꣳ स॒प्त च॑ ।2।
10301
सा॒क॒ञ्जानाꣳ॑ स॒प्तथ॑माहुरेक॒जम् । षडु॑द्य॒मा ऋष॑यो देव॒जा इति॑ ।
तेषा॑मि॒ष्टानि॒ विहि॑तानि धाम॒शः । स्था॒त्रे रे॑जन्ते॒ विकृ॑तानि रूप॒शः ।
को नु॑ मर्या॒ अमि॑थितः । सखा॒ सखा॑यमब्रवीत् । जहा॑को अ॒स्मदी॑षते ।
यस्ति॒त्याज॑ सखि॒विद॒ꣳ॒ सखा॑यम् । न तस्य॑ वा॒च्यपि॑ भा॒गो अ॑स्ति ।
यदीꣳ॑ शृणोत्य॒लकꣳ॑ शृणोति । [8]
10302
न हि प्र॒वेद॑ सुकृ॒तस्य॒ पन्था॒मिति॑ । ऋ॒तुर्ऋ॒तुनानु॒द्यमा॑नः ।
विन॑नादा॒भिधा॑वः । षष्टिश्च त्रिꣳश॑का व॒ल्गाः । शु॒क्लकृ॑ष्णौ च॒ षाष्टि॑कौ ।
सा॒रा॒ग॒व॒स्त्रैर्ज॒रद॑क्षः । व॒स॒न्तो वसु॑भिस्स॒ह । सव्वँ॑थ्सर॑स्य स॒वितुः ।
प्रै॒ष॒कृत्प्र॑थ॒मस्स्मृ॑तः । अ॒मूना॒दय॑तेत्य॒न्यान् । [9]
10303
अ॒मूꣳश्च॑ परि॒रक्ष॑तः । ए॒ता वा॒चः प्र॑पद्य॒न्ते । यत्रै॒त॑दुप॒दृश्य॑ते ।
ए॒तदे॒व विजा॒नी॒यात् । प्र॒माण॑ङ्का॒ल॒पर्य॑ये । वि॒शे॒ष॒णन्तु॑ वक्ष्या॒मः ।
ऋ॒तूनाँ॑न्तन्नि॒बोध॑त । शुक्लवा॑सा रुद्र॒गणः । ग्री॒ष्मेणा॑वर्त॒ते स॑ह ।
नि॒जह॑न्पृथि॑वीꣳ स॒र्वाम् । [10]
10304
ज्यो॒तिषा॑ प्रति॒ख्येन॑सः । वि॒श्व॒रू॒पाणि॑ वास॒ाꣳ॒सि ।

आ॒दि॒त्याना॑न्नि॒बोध॑त । सव्वंथ्सरीण॑ङ्कर्म॒फलम् । व॒र्षाभि॒र्द॑द॒ता॒ꣳ॒ सह ।
अदु॒ःखो॑ दु॒ःखच॑क्षुरि॒व । तद्मा॑पीत इ॒व॒ दृश्य॑ते । शीतेना॑व्यथ॑न्नि॒व ।
रु॒रुद॑क्ष इ॒व॒ दृश्य॑ते । ह्लादय॑ते॒ ज्वल॑तश्चै॒व । शा॒म्यत॑श्चास्य॒ चक्षु॑षी ।
या वै प्र॒जा भ्र॑श्य॒न्ते । सव्वँ॑थ्सरा॒त्ता भ्र॑श्य॒न्ते । या॒ः प्रति॑तिष्ठ॒न्ति ।
सव्वँ॑थ्सरे॒ ताः प्रति॑तिष्ठ॒न्ति । व॒र्॒षाभ्य॑ इत्य॒र्थः ।। [11]
10300
शृ॒णो॒त्य॒न्यान्थ्स॒र्वा॒मे॒व षट्च॑ ।3।
10401
अक्षि॑ दु॒ःखोत्थि॑तस्यै॒व । वि॒प्रस॑न्ने॒ क॒नीनि॑के । आङ्क्ते॑
चाद्ग॑णन्ना॒स्ति । ऋ॒भूणा॑न्तन्नि॒बोध॑त । क॒न॒का॒भानि॑ वासा॒ꣳ॒सि ।
अ॒हता॑नि नि॒बोध॑त । अन्नम॒श्नीत॑ मृज्मी॒त । अ॒हव्वा॑ जीव॒नप्र॑दः ।
ए॒ता वा॒चः प्र॑युज्य॒न्ते । श॒रद्य॑त्रोप॒दृश्य॑ते । [12]
10402
अ॒भि॒धून्वन्तो॑ऽभिघ्न॑न्त इ॒व । वा॒तव॑न्तो म॒रुद्ग॑णाः । अमु॒तो
जेतु॑मिषु॒मु॑खमि॒व । सन्न॑द्धास्स॒ह द॑दृशे॒ह । अपध्व॒स्तैर्व॑स्ति॒वर्णै॑रि॒व ।
वि॒शि॒खास॑ः कप॒र्दिनः । अक्रु॑द्धस्य॒ योथ्स्य॑मानस्य । क्रु॒द्धस्ये॑व॒ लोहि॑नी ।
हे॒मत॑श्चक्षु॑षी वि॒द्यात् । अ॒क्ष्णयो॑ः क्षिप॒णोरि॑व । [13]
10403
दु॒र्भि॒क्षन्दे॑वलो॒के॑षु । म॒नूना॑मुद॒कङ्गृ॑हे । ए॒ता वा॒चः प्र॑वद॒न्तीः ।
वै॒द्यु॒तो॑ यान्ति॒ शैशि॑रीः । ता अ॒ग्निः पव॑माना॒ अन्वै॑क्षत । इ॒ह
जी॑वि॒कामप॑रिपश्यन् । तस्यै॒षा भव॑ति । इ॒हेहव॑स्स्वत॒पसः ।
मरु॑त॒स्सूर्य॑त्वचः । शर्म॑ स॒प्रथा॒ आवृ॑णे ।। [14]
10400
दृश्य॑त इ॒वावृ॑णे ।4।
10501
अति॑ता॒म्राणि॑ वासा॒ꣳ॒सि । अ॒ष्टिव॑ज्रि श॒तघ्नि॑ च । विश्वे॑देवा
विप्र॑हर॒न्ति । अ॒ग्निजि॑ह्वा अ॒सश्च॑त । नैव दे॒वो॑ न म॒र्त्यः । न राजा
व॑रुणो॒ विभुः । नाग्निर्नेन्द्रो न पव॑मा॒नः । मा॒तृक्क॑च्चन॒ विद्य॑ते ।
दि॒व्यस्यै॑का॒ धनु॑रार्त्निः । पृ॒थि॒व्यामप॑रा श्रि॒ता । [15]
10502
तस्येन्द्रो॑ व॒म्रिरू॑पे॒ण । ध॒नुर्ज्या॑मछि॒नथ्स्व॑यम् ।
तदि॑न्द्र॒धनु॑रित्य॒ज्यम् । अ॒भ्रव॑र्णेषु॒ चक्ष॑ते । एतदेव

शय्योँर्बार्॒हस्पत्य॒स्य । ए॒तद्रु॑द्रस्य॒ धनुः । रु॒द्रस्य॑ त्वे॒व

धनु॑रार्त्निः । शिर॒ उत्पि॑पेष । स प्र॑व॒र्ग्यो॑ऽभवत् ।

तस्मा॒द्यस्सप्र॑व॒र्ग्येण॑ य॒ज्ञेन॒ यज॑ते । रु॒द्रस्य॒ स शिर॒ः प्रति॑दधाति ।

नैनꣳ॑ रु॒द्र आरु॑को भवति । य ए॒वं वेद॑ ।। [16]

10500

श्रि॒ता यज॑ते॒ त्रीणि॑ च ।5।

10601

अ॒त्यू॒र्ध्वा॒क्षोऽति॑रश्चात् । शिशि॑रः प्र॒दृश्य॑ते । नैव रूपन्न॑ वासा॒ꣳ॒सि ।

न चक्षुरोषि॑

न्यञ्ज॒लिकाम् । त्व॒ङ्करो॑षि नि॒जानु॑काम् । [17]

10602

निजानुका मे॑ न्यञ्ज॒लिका । अमी वाचमुपास॑तामि॒ति । तस्मै सर्व ऋतवो॑

नम॒न्ते । मर्यादाकरत्वात्प्र॑पुरो॒धाम् । ब्राह्मण॑ आप्नोति । य ए॑वं वे॒द ।

स खलु सव्वँथ्सर एतैस्सेनानी॑भिस्स॒ह । इन्द्राय सर्वान्कामान॑भिव॒हति ।

स द्र॒प्सः । तस्यै॒षा भव॑ति । [15]

10603

अव॑ द्र॒प्सो अꣳ॑शु॒मती॑मतिष्ठत् । इ॒या॒नः कृ॒ष्णो द॒शभि॑स्स॒हस्रै॑ः ।

आव॒र्तमिन्द्र॒श्शच्या॒ धम॑न्तम् । उपस्नु॒हितन्नृ॒मणामथ॑द्रामि॒ति ।

एतयैवेन्द्रस्सलावृ॑क्या स॒ह । असुरान्प॑रिवृ॒श्चति । पृथि॑व्य॒ꣳ॒शुम॑ती ।

ताम॒न्वव॑स्थितस्सव्वँथ्स॒रो दि॒वञ्च॑ । नैवव्विदुषाऽऽचार्या॑न्तेवा॒सिनौ ।

अन्योन्यस्मै॑ द्रुह्या॒ताम् । यो द्रु॒ह्यति । भ्रश्यते स्व॑र्गाल्लो॒कात् ।

इत्यृतुम॑ण्डला॒नि । सूर्यमण्डला॑न्याख्या॒यिकाः । अत ऊर्ध्वꣳ स॑निर्व॒चनाः । [19]

10600

नि॒जानु॑का॒ं भव॑ति द्रु॒ह्यातां पञ्च॑ च ।6।

10701

आरोगो भ्राजः पटर॑ः पत॒ङ्गः । स्वर्णरो ज्योतिषीमान्॒ विभा॒सः । ते

अस्मै सर्वे दिवमा॑तपन्ति । ऊर्जन्दुहाना अनपस्फुर॑न्त इति । कश्य॑पोऽष्टमः ।

स महामेरुन्न॑ जहा॒ति । तस्यै॒षा भव॑ति । यत्ते॒ शिल्प॑ङ्कश्यप रोच॒नाव॑त् ।

इ॒न्द्रियाव॑त्पुष्क॒लञ्चि॒त्रभा॑नु । यस्मि॒न्थ्सूर्या॒ अर्पि॑तास्स॒प्त

सा॒कम् । [20]

10702

तस्मिन्राजानमधिविश्रये॑ममि॒ति । ते अस्मै सर्वे कश्यपाज्ज्योति॑र्लभ॒न्ते ।

तान्थ्सोमः कश्यपादधि निर्धमति । भ्रस्ता कर्मकृदिवैवम् । प्राणो
जीवानीन्द्रियजीवानि । सप्त शीर्षण्याः प्राणाः । सूर्या इत्याचार्याः ।
अपश्यमहमेतान्थ्सप्त सूँर्यानिति । पञ्चकर्णो वाथ्स्यायनः । सप्तकर्णश्च
प्लाक्षिः । [21]
10703
आनुश्रविक एव नौ कश्यप इति । उभौ वेदयिते । न हि शेकुमिव
महामेरुङ्गन्तुम् । अपश्यमहमेतथ्सूर्यमण्डलं परिवर्तमानम् । गार्ग्यः
प्राणत्रातः । गच्छन्त महामेरुम् । एकञ्चाजहतम् । भ्राज पटर पतङ्गा
निहने । तिष्ठन्नातपन्ति । तस्मादिह तप्तितपाः । [22 ]
10704
अमुत्रेतरे । तस्मादिहातप्तितपाः । तेषामेषा भवति । सप्त
सूर्या दिवमनुप्रविष्टाः । तानन्वेति पथिभिर्दक्षिणावान् । ते अस्मै
सर्वे घृतमातपन्ति । ऊर्जन्दुहाना अनपस्फुरन्त इति । सप्तर्त्विजस्सूर्या
इत्याचार्याः । तेषामेषा भवति । सप्त दिशो नानासूर्याः । [23]
10705
सप्त होतार ऋत्विजः । देवा आदित्या ये सप्त । तेभिस्सोमाभी
रक्षण इति । तदप्याम्नायः । दिग्भ्राज ऋतूँन्करोति । एतयैवावृता
सहस्रसूर्यताया इति वैशम्पायनः । तस्यैषा भवति । यद्द्याव इन्द्र ते
शतꣳ शतं भूमीः । उत स्युः । न त्वा वज्रिन्थ्सहस्रꣳ सूर्याः । [24]
10706
अनु न जातमष्ट रोदसी इति । नानालिङ्गत्वादृतूनान्नानासूर्यत्वम् ।
अष्टौ तु व्यवसिता इति । सूर्यमण्डलान्यष्टात ऊर्ध्वम् । तेषामेषा भवति ।
चित्रन्देवानामुदगादनीकम् । चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्रा द्यावापृथिवी अन्तरिक्षम् । सूर्य आत्मा जगतस्तस्थुषश्चेति ।[25]
10700
साकं प्लाक्षिस्तप्तितपा नानासूर्यास्सूर्या नव च ।7।
10801
क्वेदमभ्रन्निविशते । क्वायꣳ सव्वँथ्सरो मिथः । क्वाहः
क्वेयन्देवरात्री । क्व मासा ऋतवः श्रिताः । अर्धमासा मुहूर्ताः ।
निमेषास्त्रुटिभिस्सह । क्वेमा आपो निविशन्ते । यदीतो यान्ति संप्रति ।
काला अफ्सु निविशन्ते । आपस्सूर्ये समाहिताः । [26]
10802

अ॒भ्राँण्य॒पः प्र॑पद्य॒न्ते । वि॒द्युथ्सू॒र्ये॑ स॒माहि॑ता । अनवर्णे इ॑मे
भू॒मी । इ॒यञ्चा॑सौ च॒ रोद॑सी । किस्विदत्रान्त॑रा भू॒तम् । ये॒नेमे
वि॑धृते॒ उभे । वि॒ष्णुना॑ विधृ॑ते भू॒मी । इ॒ति व॑थ्सस्य॒ वेद॑ना । इरा॑वती
धेनु॒मती॒ हि भू॒तम् । सू॒य॒व॒सिनी॒ मनु॑षे दश॒स्ये॑ । [27]
10803
व्यष्ट॑भ्ना॒द्रोद॑सी॒ विष्ण॑वे॒ ते । दा॒धर्थ॑ पृथि॒वीम॒भितो॑ म॒यूखैः॑ ।
किन्तद्विष्णोर्ब॑लमा॒हुः । का॒ दीप्तिः॑ किं प॒राय॑णम् । एको॑
य॒द्धार॑यद्दे॒वः । रे॒जती॑ रोद॒सी उ॒भे । वाताद्विष्णोर्ब॑लमा॒हुः ।
अ॒क्षरा॑द्दीप्ति॒रुच्य॑ते । त्रि॒पदा॒द्धार॑यद्दे॒वः । यद्विष्णोरेक॒मुत्त॑मम् । [28]
10804
अ॒ग्नयो॑ वाय॑वश्चैव । ए॒तद॑स्य प॒राय॑णम् । पृच्छामि त्वा प॑रं
मृ॒त्युम् । अ॒वमं॑ मध्य॒मञ्च॑तुम् । लो॒कञ्च॒ पुण्य॑पापा॒नाम् ।
ए॒तत्पृ॑च्छामि॒ संप्र॑ति । अ॒मुमा॑हुः प॑रं मृ॒त्युम् । प॒वमा॑नन्तु॒ मध्य॑मम् ।
अ॒ग्निरे॒वाव॑मो मृत्युः । च॒न्द्रमा॑श्चतु॒रुच्य॑ते । [29]
10805 अ॒ना॒भो॒गाः प॑रं मृ॒त्युम् । पा॒पास्सं॑य्यँन्ति॒ सर्व॑दा । आ भोगास्त्वेव॑
सय्यं॑न्ति । य॒त्र पु॑ण्यकृ॒तो ज॑नाः । ततो॑ म॒ध्यम॑मायन्ति । च॒तुर्म॑ग्निञ्च
संप्र॑ति । पृच्छामि त्वा॑ पाप॒कृतः । य॒त्र या॑तय॒ते य॑मः ।
त्वन्न॒स्तद्ब्रह्म॒न्प्रब्रू॒हि । य॒दि वे॑त्था स॒तो गृ॑हान् । [30]
10806
क॒श्यपा॑दुदि॑तास्सू॒र्याः । पा॒पान्निर्घ्न॑न्ति॒ सर्व॑दा ।
रोदस्योरन्त॑र्देश॒षु । तत्र न्यस्यन्ते॑ वास॒वैः । तेऽशरीराः प्र॑पद्य॒न्ते ।
य॒थाऽपु॑ण्यस्य॒ कर्म॑णः । अपा॑ण्य॒पाद॑केशा॒सः । त॒त्र ते॑ऽयोनि॒जा ज॑नाः ।
मृत्वा पुनर्मृत्युमा॑पद्य॒न्ते । अ॒द्यमा॑नास्स्व॒कर्म॑भिः । [31]
10807
आशातिकाः क्रिम॑य इ॒व । ततः पूयन्ते॑ वास॒वैः । अपैतं॑ मृत्युञ्ज॑यति ।
य ए॑वव्वे॒द । स खल्वैवव्विं॑द्ब्राह्मणः । दी॒र्घश्रु॑त्तमो॒ भव॑ति ।
कश्य॑प॒स्याति॑थि॒स्सिद्धग॑मन॒स्सिद्धाग॑मनः । तस्यै॒षा भव॑ति । आ
यस्मि॑न्थ्स॒प्त वा॑स॒वाः । रोह॑न्ति पू॒र्व्या॑ रुहः॑ । [32]
10808
ऋषि॑र्ह दीर्घ॒श्रुत्त॑मः । इन्द्र॑स्य घर्मो॑ अति॑थिरि॒ति । कश्यपः
पश्य॑को भ॒वति । यथ्सर्वं॑ परिपश्यतीति सौ॒क्ष्म्यात् । अथाग्ने॑रष्टपु॑रुष॒स्य ।

तस्यैषा भवति । अग्ने नय सुपथा राये अस्मान् । विश्वानि देव वयुनानि
विद्वान् । युयोध्यस्मज्जुहुराणमेनः । भूयिष्ठान्ते नमउक्तिं विधेमेति ।। [33]
10800
समाहिता दशस्यै उत्तममुच्यते गृहान्थ्स्वकर्मभिः पूर्व्या रुहं इति ।8।
10901
अग्निश्च जातवेदाश्च । सहोजा अजिराप्रभुः । वैश्वानरो नर्यापाश्च ।
पङ्क्तिराधाश्च सप्तमः । विसर्पेवाष्टमोऽग्नीनाम् । एतेऽष्टौ वसवः
क्षिता इति । यथेर्त्वेवाग्नेरर्चिर्वर्णविशेषाः । नीलार्चिश्च
पीतकार्चिश्चेति । अथ वायोरेकादशपुरुषस्यैकादशस्त्रीकस्य । प्रभ्राजमाना
व्यवदाताः । [34]
10902
याश्च वासुकिवैद्युताः । रजताः परुषाः श्यामाः । कपिला अतिलोहिताः ।
ऊर्ध्वा अवपतन्ताश्च । वैद्युत इत्येकादश । नैनव्वैँद्युतो हिनस्ति ।
य एवव्वेँद । स होवाच व्यासः पाराशर्यः । विद्युद्वधमेवाहं मृत्युमैच्छमिति ।
न त्वकामꣳ हन्ति । [35]
10903
य एवव्वेँद । अथ गन्धर्वगणाः । स्वान् भ्राट् । अङ्घारिर्बम्भारिः ।
हस्तस्सुहस्तः । कृशानुर्विश्वावसुः । मूर्धन्वान्थ्सूर्यवर्चाः ।
कृतिरित्येकादश गन्धर्वगणाः । देवाश्च महादेवाः । रश्मयश्च देवा गरगिरः । [36]
10904
नैनङ्गरो हिनस्ति । य एवव्वेँद । गौरी मिमाय सलिलानि तक्षती ।
एकपदी द्विपदी सा चतुष्पदी । अष्टापदी नवपदी बभूवुषी ।
सहस्राक्षरा परमे व्योमन्निति । वाचो विशेषणम् । अथ निगदव्याख्याताः ।
ताननुक्रमिष्यामः । वराहवस्स्वतपसः । [37]
10905
विद्युन्महसो धूपयः । श्वापयो गृहमेधाश्चेत्येते । ये चेमे
शिमिविद्विषः । पर्जन्यास्सप्त पृथिविमभिवर्षन्ति । वृष्टिभिरिति ।
एतयैव विभक्तिविपरीताः । सप्तभिर्वातैरुदीरिताः । अमूल्लोकानभिवर्षन्ति ।
तेषामेषा भवति । समानमेतदुदकम् । [38]
10906
उच्चैत्यवचाहभिः । भूमिं पर्जन्या जिन्वन्ति ।
दिवञ्जिन्वन्त्यग्नय इति । यदक्षरं भूतकृतम् । विश्वे देवा उपासते ।

म॒हर्षि॑मस्य गो॒प्तार॑म् । ज॒मद॑ग्नि॒मकु॑र्वत । ज॒मद॑ग्नि॒राप्या॑यते ।
छन्दो॑भिश्चतुरुत्त॒रैः । रा॒ज्ञस्सोम॑स्य तृ॒प्तासः॑ । [39]
10907
ब्रह्म॑णा वी॒र्या॑वता । शि॒वा नः॑ प्र॒दिश॒ो दिशः॑ । तच्छ॒य्योरावृ॑णीमहे ।
गा॒तुय्यँ॒ज्ञाय॑ । गा॒तुय्यँ॒ज्ञप॑तये । दैवी᳚ स्व॒स्तिर॑स्तु नः ।
स्व॒स्तिर्मानु॑षेभ्यः । ऊ॒र्ध्वञ्जि॑गातु भेष॒जम् । शन्नो॑ अस्तु द्वि॒पदे᳚ ।
शञ्चतु॑ष्पदे । सोमपा (3) असोमपा (3) इति निगद॑व्याख्या॒ताः । [40]
10900
व्य॒व॒दा॒ता ह॒न्ति ग॑र॒गिरस्त॒पस उद॑कन्तृ॒प्तास॒श्चतु॑ष्पद॒ एक॑ञ्च ।9।
11001
स॒ह॒स्र॒वृदि॑यं भू॒मिः । प॒रव्व्यो॑म स॒हस्र॑वृत् । अ॒श्विना॑
भुज्यू॒ नास॒त्या । वि॒श्वस्य॑ जग॒तस्प॑ती । जाया भूमिः पति॑र्व्यो॒म ।
मि॒थुन॑न्ता अ॒तुर्य॑थुः । पुत्रो बृहस्प॑ती रु॒द्रः । स॒रमा॑ इति॑
स्त्रीपु॒मम् । शु॒क्रव्वाँ॑म॒न्यद्य॑ज॒तव्वाँ॑म॒न्यत् । विषु॑रूपे॒ अह॑नी॒
द्यौरि॑व स्थः । [41]
11002
विश्वा॒ हि मा॒या अव॑सि स्वधावः । भ॒द्रा वा॑म्पूषणावि॒ह रा॒तिर॑स्तु ।
वासा॑त्यौ चि॒त्रौ जग॑तो नि॒धानौ᳚ । द्यावा॑भूमी च॒रथ॑स्स॒ꣳसखा॑यौ ।
ताव॒श्विना॑ रा॒सभा॑श्वा हवं॑ मे । शु॒भ॒स्प॒ती आ॒गतꣳ॑ सू॒र्यया॑ स॒ह ।
त्युग्रो॑ ह भु॒ज्युम॑श्विनोदमे॒घे । र॒यिन्न कश्चि॑न्ममृ॒वा (2) म् अवा॑हाः ।
तमू॑हथुर्नौ॒भिरा॑त्म॒न्वती॑भिः । अ॒न्त॒रि॒क्ष॒प्रुद्भि॒रपो॑दकाभिः । [42]
11003
ति॒स्रः क्षप॒स्त्रिरहा॑ति॒व्रज॑द्भिः । नास॑त्या भु॒ज्युमू॑हथुः पत॒ङ्गैः ।
स॒मु॒द्रस्य॒ धन्व॑न्नार्द्रस्य॑ पा॒रे । त्रि॒भीरथै᳚श्श॒तप॑द्भि॒ष्षड॑श्वैः ।
स॒वि॒तार॒व्वित॑न्वन्तम् । अनु॑बध्नाति शाम्ब॒रः । आपपूर॒षम्ब॑रश्चै॒व ।
स॒विता॑ऽरेप॒सो॑ऽभवत् । त्यꣳ सुतृप्तं॑ वि॑दित्वै॒व । ब॒हु सो॑म गि॒रव्वँ॑शी । [43]
11004
अन्वेति तुग्रो॑वक्रि॒यान्तम् । आयसूयान्थ्सोम॑तृफ्सु॒षु ।
ससङ्ग्रामस्तमो᳚द्योऽत्यो॒तः । वाचो गाः पि॑पाति॒ तत् । स
तद्गोभिस्तवा॑त्येत्य॒न्ये । र॒क्षसा॑नन्वि॒ताश्च॑ ये । अ॒न्वेति॒ परि॑वृत्या॒
स्तः । ए॒वम॒तौ स्थो॑ अश्विना । ते ए॒ते द्युः॑पृथि॒व्योः । अह॑रह॒गर्भ॑न्दधाथे । [44]
11005

तयो॑रे॒तौ व॒थ्सावहोरा॒त्रे । पृ॒थि॒व्या अह॑: । दि॒वो रात्रि॑: ।
ता अवि॑सृष्टौ । दम्प॑ती ए॒व भ॑वतः । तयो॑रे॒तौ व॒थ्सौ । अ॒ग्निश्चा॑दि॒त्यश्च॑ ।
रा॒त्रेर्व॒थ्सः । श्वे॒त आ॑दि॒त्यः । अह्नो॑ऽग्निः । [45]
11006
ता॒म्रो अ॑रु॒णः । ता अवि॑सृष्टौ । दम्प॑ती ए॒व भ॑वतः । तयो॑रे॒तौ
व॒थ्सौ । वृ॒त्रश्च॑ वैद्यु॒तश्च॑ । अ॒ग्नेर्वृ॒त्रः । वै॒द्यु॒त॑ आदि॒त्यस्य॑ ।
ता अवि॑सृष्टौ । दम्प॑ती ए॒व भ॑वतः । तयो॑रे॒तौ व॒थ्सौ । [46]
11007
उ॒ष्मा च॑ नीहा॒रश्च॑ । वृ॒त्रस्यो॒ष्मा । वै॒द्यु॒तस्य॑ नीहा॒रः । तौ तावे॒व
प्रति॑पद्येते । सेयꣳ रात्री॑ ग॒र्भिणी॑ पु॒त्रेण॒ सव्वँ॑सति । तस्या॒ वा
ए॒तदु॒ल्बण॑म् । यद्रात्रौ॑ र॒श्मय॑: । यथा॒ गोर्ग॒र्भिण्या॑ उ॒ल्बण॑म् ।
ए॒वमे॒तस्या॑ उ॒ल्बण॑म् । प्रजयिष्णुः प्रजया च पशु॒भि॑श्च भ॒वति ।
य ए॑वव्वँ॒द । एतमुद्यन्तमपिय॑न्तञ्चेति । आदित्यः पुण्य॑स्य व॒थ्सः ।
अथ पवि॑त्राङ्गि॒रसः । [47]
11000
स्थोऽपो॑दकाभिर्वशी दधाथे अ॒ग्निस्तयो॑रे॒तौ व॒थ्सौ भ॒वति च॒त्वारि॑ च ।10।
11101
प॒वित्र॑वन्त॒: परि॒वाज॒मास॑ते । पि॒तैषा॑ प्र॒त्नो अ॒भिर॑क्षति
व्र॒तम् । म॒हस्स॑मु॒द्रव्व॑रु॑णस्ति॒रोद॑धे । धीरा॑ इच्छेकु॒र्धरु॑णेष्वा॒रभ॑म् ।
प॒वित्र॑न्ते॒ वित॑तं॒ ब्रह्म॑ण॒स्पते॑ । प्रभु॒र्गात्रा॑णि॒ पर्ये॑षि वि॒श्वत॑: ।
अत॑प्ततनू॒र्नतदा॒मो अ॑श्नुते । शृ॒तास॒ इद्वह॑न्त॒स्तथ्समा॑शत । ब्र॒ह्मा
दे॒वाना॑म् । अस॑तस्स॒द्ये तत॑क्षुः । [48]
11102
ऋष॑यस्स॒प्तात्रि॑श्च॒ यत् । सर्वे॒ऽत्रयो अ॑गस्त्य॒श्च ।
नक्ष॑त्रै॒श्शङ्कृ॑तोऽवसन् । अथ॑ सवितु॒श्श्यावाश्व॒स्यावर्ति॑कामस्य ।
अ॒मी य ऋक्षा॒ निहि॑तास उ॒च्चा । नक्त॒न्दद॑श्रे॒ कुह॑चि॒द्दिवे॑युः ।
अद॑ब्धानि॒ वरु॑णस्य व्र॒तानि॑ । वि॒चा॒कश॑च्च॒न्द्रम॒ा नक्ष॑त्रमेति ।
तथ्स॑वि॒तुर्वरे॑ण्यम् । भर्गो॑ दे॒वस्य॑ धीमहि । [49]
11103
धियो॒ यो न॑: प्रचो॒दया॑त् । तथ्स॑वि॒तुर्वृ॑णीमहे । व॒यन्दे॒वस्य॒
भोज॑नम् । श्रेष्ठꣳ॑ सर्व॒धात॑मम् । तु॒रं॒ भग॑स्य धीमहि । अपा॑गूहत सवि॒ता

तृभीन् । सर्वाँन्दिवो अन्धसः । नक्तुन्तान्यभवन्दृशे । अस्थ्यस्था
संभविष्यामः । नाम नामैव नाममे । [50]
11104
नपुंसकं पुमाःस्त्र्यस्मि । स्थावरोऽस्म्यथ ज़ङ्गमः । यजेयक्षि
यष्टाहे च । मया भूतान्ययक्षत । पशवो मम भूतानि । अनूबन्ध्योऽस्म्यहं
विभुः । स्त्रियस्सतीः । ता उ मे पुंस आहुः । पश्यदक्षण्वान्न विचैतदन्धः । कुविर्यः
पुत्रस्स इमा चिकेत । [51]
11105
यस्ताविजानात्सवितुः पिताऽसत् । अन्धो मणिमविन्दत् ।
तमनङ्गुलिरावयत् । अग्रीवः प्रत्यमुञ्चत् । तमजिह्वा असश्चत ।
ऊर्ध्वमूलमवाक्छाखम् । वृक्षय्यों वेद सम्प्रति । न स जातु
जनश्श्रद्दध्यात् । मृत्युर्मा मारयादिति । हसितः रुदितङ्गीतम् । [52]
11106
वीणापणवलासितम् । मृतञ्जीवञ्च यत्किञ्चित् । अङ्गानि स्नेव
विद्धि तत् । अतृष्यतृष्यध्यायत् । अस्माज्जाता मे मिथूचरन् ।
पुत्रो निरृत्या वैदेहः । अचेता यश्च चेतनः । स तं मणिमविन्दत् ।
सोऽनङ्गुलिरावयत् । सोऽग्रीवः प्रत्यमुञ्चत् । [53]
11107
सोऽजिह्वो असश्चत । नैतमृषिँविदित्वा नगरं प्रविशेत् । यदि
प्रविशेत् । मिथौ चरित्वा प्रविशेत् । तथ्संभवस्य व्रतम् । आ तमग्ने
रथन्तिष्ठ । एकाश्वमेकुयोजनम् । एकचक्रमेकुधुरम् ।
वातध्राजिगतिँविभो । नरिष्यति न व्यथते । [54]
11108
नास्याक्षो यातु सज्जति । यच्छ्वेताँन्रोहिताःश्चाग्नेः ।
रथे युक्त्वाधितिष्ठति । एकया च दशभिश्च स्वभूते । द्वाभ्यामिष्टये
विंशत्या च । तिसृभिश्च वहसे त्रिंशता च । नियुद्भिर्वायविह ता विमुञ्च ।। [55]
11100
ततक्षुर्धीमहि नाम मे चिकेत गीतं प्रत्यमुञ्चव्द्यथते सप्त च ।11।
11201
आतनुष्व प्रतनुष्व । उद्धमाधम सन्धम । आदित्ये
चन्द्रवर्णानाम् । गर्भमाधेहि यः पुमान् । इतस्सिक्तः सूर्यगतम् ।
चन्द्रमसे रसङ्कृधि । वारादञ्जनयाग्रेऽग्निम् । य एको रुद्र उच्यते ।

अ॒स॒ङ्ख्या॒तास्स॑हस्रा॒णि । स्म॒र्यते॑ न च॒ दृश्य॑ते । [56]
11202
ए॒वमे॒तन्नि॑बोधत । आ म॒न्द्रैरि॑न्द्र॒ हरि॑भिः । या॒हि म॒यूर॑रोमभिः ।
मा त्वा केचिन्नियेमुरि॑न्न॒पा॒शिनः । द॒ध॒न्वेव॒ ता इ॑हि । माम॒न्द्रैरि॑न्द्र॒
हरि॑भिः । या॒मि म॒यूर॑रोमभिः । मा मा केचिन्नियेमुरि॑न्न॒पा॒शिनः ।
नि॒ध॒न्वेव॒ ता (2) म् इ॑मि । अणुभिश्च म॑हद्भि॒श्च । [57]
11203
नि॒घृष्वैर॑स॒मायु॑तैः । कालैर्॒हरित्व॑माप॒न्नैः । इन्द्राया॑हि
स॒हस्र॑युक् । अ॒ग्निर्वि॒भ्राष्टि॑वसनः । वा॒युश्श्वेत॑सिकद्रु॒कः ।
स॒व्वँ॒थ्स॒रो वि॑षू॒वर्णैः॑ । नित्या॒स्तेऽनुच॑रास्त॒व । सुब्रह्मण्योꣳ
सुब्रह्मण्योꣳ सु॑ब्रह्म॒ण्योम् । इन्द्रागच्छ हरिव आगच्छ मे॑धाति॒थेः ।
मेषवृषणश्व॑स्य मे॒ने । [58]
11204
गौरावस्कन्दिन्नहल्या॑यै जा॒र । कौशिक ब्राह्मण गौतम॑ ब्रु॒वा॒ण ।
अ॒रु॒णाश्वा॑ इ॒हाग॑ताः । वस॑वः पृथिवि॒क्षित॑ः । अ॒ष्टौ दि॒ग्वास॑सो॒ऽग्नय॑ः ।
अग्निश्च जातवेदा॑श्चेत्ये॒ते । ताम्राश्वा॑स्ताम्र॒रथाः ।
ताम्रवर्णा॑स्तथा॒सिताः । दण्डहस्ता॑ः खाद॒ग्दतः । इतो रुद्रा॑ः प॒राङ्गताः । [59]
11205
उक्तस्थानं प्रमाणञ्च॑ पु॒र इत । बृ॒ह॒स्पति॑श्च सवि॒ता च॑ ।
वि॒श्वरू॑पैरि॒हाग॑ताम् । रथे॑नोदक॒वर्त्म॑ना । अ॒प्सुषा॑ इति॒ तद्द्व॑योः ।
उक्तो वेषो॑ वासा॒ꣳसि च । कालावयवानामित॑ः प्रती॒च्या । वासात्या॑
इत्य॒श्विनोः । कोऽन्तरिक्षे शब्दङ्क॑रोती॒ति । वासिष्ठो रौहिणो
मीमाꣳ॑साञ्चक्रे । तस्यै॒षा भव॑ति । वा॒श्रेव॑ वि॒द्युदिति॑ । ब्रह्म॑ण
उ॒दर॑णमसि । ब्रह्म॑ण उदी॒रण॑मसि । ब्रह्म॑ण आ॒स्तर॑णमसि । ब्रह्म॑ण
उप॒स्तर॑णमसि ।। [60]
11200
दृश्य॑ते॒ च मे॒ने प॑रा॒ङ्गताश्च॒क्रे षट्च॑ ।12।
11301
अ॒ष्टयो॑नीम॒ष्टपु॑त्राम् । अ॒ष्टप॑त्नीमि॒मां मही॑म् । अ॒हव्वे॑द॒ न मे॑
मृत्युः । न चाम॑त्यु॒र॒घाह॑रत् । अ॒ष्टयो॑न्य॒ष्टपु॑त्रम् ।
अ॒ष्टप॑दि॒दम॒न्तरि॑क्षम् । अ॒हव्वे॑द॒ न मे॑ मृत्युः । नचाम॑त्यु॒र॒घाह॑रत् ।

अ॒ष्टयो॑नीम॒ष्टपु॑त्राम् । अ॒ष्टप॑त्नीम॒मून्दिव॑म् । [61]
11302
अ॒हव्वे॑द॒ न मे॑ मृत्युः । न चामृ॑त्युर॒घाह॑रत् । सु॒त्रामा॑णं
म॒हीमूषु । अदि॑ति॒र्द्यौरदि॑तिर॒न्तरि॑क्षम् । अदि॑तिर्मा॒ता स पि॒ता स
पु॒त्रः । विश्वे॑ दे॒वा अदि॑तिः पञ्चजना॑ः । अदि॑तिर्जा॒तमदि॑ति॒र्जनि॑त्वम् ।
अ॒ष्टौ पु॒त्रास॒ो अदि॑तेः । ये जा॒तास्त॒न्वः परि॑ । दे॒वा (2)म्
उप॑प्रैथ्स॒प्तभि॑ः । [62]
11303
प॒रा॒मा॒र्ता॒ण्डमास्य॑त् । स॒प्तभि॑ः पु॒त्रैरदि॑तिः ।
उप॒प्रैत्पूर्व्य॑य्युँग॑म् । प्र॒जायै॑ मृत्यवे त॑त् ।
प॒रा॒मा॒र्ता॒ण्डमाभ॑र॒दिति॑ । ताननु॒क्रमि॑ष्या॒मः । मि॒त्रश्च॒ वरु॑णश्च ।
धा॒ता चा॑र्य॒मा च॑ । अꣳश॑श्च॒ भग॑श्च । इन्द्र॑श्च विवस्वाꣳश्चेत्ये॒ते ।
हि॒र॒ण्य॒ग॒र्भो ह॒ꣳ॒सश्शु॑चि॒षत् । ब्रह्म॑ जज्ञानन्तदित्प॒दमिति॑ ।
ग॒र्भः प्रा॑जाप॒त्यः । अथ॒ पुरु॑षस्स॒प्त पुरु॑षः ।। [63]
11300
अ॒मून्दिवꣳ॑ स॒प्तभि॑र॒ेते च॒त्वारि॑ च ।13।
11401
योऽसौ॑ त॒पन्नु॒देति॑ । स सर्वे॑षां भू॒ताना॑ं प्रा॒णाना॒दाया॒ोदेति॑ ।
मा मे॑ प्र॒जाया॒ मा प॑शू॒नाम् । मा मम॑ प्रा॒णाना॒दायोद॑गाः । अ॒सौ
यो॑ऽस्त॒मेति॑ । स सर्वे॑षां भू॒ताना॑ं प्रा॒णाना॒दाया॒स्तमेति॑ । मा मे॑
प्र॒जाया॒ मा प॑शू॒नाम् । मा मम॑ प्रा॒णाना॒दायास्त॑ङ्गाः । अ॒सौ य
आ॒पूर्य॑ति । स सर्वे॑षां भू॒ताना॑ं प्रा॒णैरा॒पूर्य॑ति । मा मे॑ प्र॒जाया॒ मा
प॑शू॒नाम् । मा मम॑ प्रा॒णैरा॒पूरि॑ष्ठाः । अ॒सौ यो॑ऽप॒क्षीय॑ति । स सर्वे॑षां
भू॒ताना॑ं प्रा॒णैरप॑क्षीयति । मा मे॑ प्र॒जाया॒ मा प॑शू॒नाम् । मा मम॑
प्रा॒णैरप॑क्षेष्ठाः । [64]
11402
अ॒मूनि॒ नक्ष॑त्राणि । सर्वे॑षां भू॒ताना॑ं प्रा॒णैरप॑प्रसर्पन्ति॒
चोथ्स॑र्पन्ति च । मा मे॑ प्र॒जाया॒ मा प॑शू॒नाम् । मा मम॑ प्रा॒णैरप॑प्रसृपत॒
मोथ्सृ॑पत । इ॒मे मासा॑श्चार्धमा॒साश्च॑ । सर्वे॑षां भू॒ताना॑ं
प्रा॒णैरप॑प्रसर्पन्ति॒ चोथ्स॑र्पन्ति च । मा मे॑ प्र॒जाया॒ मा प॑शू॒नाम् ।
मा मम॑ प्रा॒णैरप॑प्रसृपत॒ मोथ्सृ॑पत । इ॒म ऋ॒तव॑ः । सर्वे॑षां भू॒ताना॑ं

प्रा॒णैर॑प॒प्रसर्पन्ति॒ चोथ्स॑र्पन्ति च । मा मे॑ प्र॒जाया॒ मा प॑शू॒नाम् ।
मा मम॑ प्रा॒णैर॑प॒प्रसृपत॒ मोथ्सृ॑पत । [65]
11403
अ॒यꣳ सं॑व्वँथ्स॒रः । सर्वे॑षां भू॒ताना॑ प्रा॒णैर॑प॒प्रसर्पति॒
चोथ्स॑र्पति च । मा मे॑ प्र॒जाया॒ मा प॑शू॒नाम् । मा मम॑ प्रा॒णैर॑प॒प्रसृप॒
मोथ्सृ॑प । इ॒दमहः॑ । सर्वे॑षां भू॒ताना॑ प्रा॒णैर॑प॒प्रसर्पति॒ चोथ्स॑र्पति च ।
मा मे॑ प्र॒जाया॒ मा प॑शू॒नाम् । मा मम॑ प्रा॒णैर॑प॒प्रसृप॒ मोथ्सृ॑प ।
ओं भूर्भु॑व॒स्स्वः॑ । एतद्वो मिथुनं मा नो मिथु॑नꣳ री॒ढ्वम् ।। [66]
11400
योऽसौ॒ षोड॑शा॒मूनि॒ द्वाद॑शा॒यञ्चतु॒र्दश ।।
उ॒देत्य॑स्त॒मेत्या॒पूर्य॑त्यप॒क्षीय॑त्य॒मूनि॒ नक्ष॑त्राणी॒मे मासा॑ इ॒म
ऋ॒तवो॒ऽयꣳ सं॑व्वँथ्स॒र इ॒दमह॑रि॒यꣳ रात्रि॒र्दर्श॑ ।14।
11501
अथादित्य॒स्याष्टपु॑रुष॒स्य । वसूनामादित्यानाꣳ स्थाने स्वतेज॑सा भा॒नि ।
रुद्राणामादित्यानाꣳ स्थाने स्वतेज॑सा भा॒नि । आदित्यानामामादित्यानाꣳ स्थाने
स्वतेज॑सा भा॒नि । सताꣳ॑ सत्या॒नाम् । आदित्यानाꣳ स्थाने स्वतेज॑सा भा॒नि ।
अभिधून्वता॑मभि॒घ्नताम् । वातव॑तां म॒रुताम् । आदित्यानाꣳ स्थाने स्वतेज॒सा
भा॒नि । ऋभूणामादित्यानाꣳ स्थाने स्वतेज॑सा भा॒नि । विश्वेषा॑न्देवा॒नाम् ।
आदित्यानाꣳ स्थाने स्वतेज॑सा भा॒नि । सव्वँथ्सर॑स्य स॒वितुः । आदित्यस्य
स्थाने स्वतेज॑सा भा॒नि । ओँ भूर्भु॑व॒स्स्वः॑ । रश्मयो वो मिथुनं मा नो
मिथु॑नꣳ री॒ढ्वम् ।। [67]
11500
ऋभूणामादित्यानाꣳ स्थाने स्वतेज॑सा भा॒नि षट्च॑ ।16।
11601
आरोगस्य स्थाने स्वतेज॑सा भा॒नि । भ्राजस्य स्थाने स्वतेज॑सा भा॒नि ।
पटरस्य स्थाने स्वतेज॑सा भा॒नि । पतङ्गस्य स्थाने स्वतेज॑सा भा॒नि ।
स्वर्णरस्य स्थाने स्वतेज॑सा भा॒नि । ज्योतिषीमतस्य स्थाने स्वतेज॑सा भा॒नि ।
विभासस्य स्थाने स्वतेज॑सा भा॒नि । कश्यपश्य स्थाने स्वतेज॑सा भा॒नि ।
ओँभूर्भु॑व॒स्स्वः॑ । आपो वो मिथुनं मा नो मिथु॑नꣳ री॒ढ्वम् ।।[68]
11600
आरोगस्य दर्श॑ ।16।
11701

अथ वायोरेकादशपुरुषस्यैकादशस्त्रीकस्य । प्रभ्राजमानानां रुद्राणानां
स्थाने स्वतेजसा भानि । व्यवदातानां रुद्राणां स्थाने स्वतेजसा भानि ।
वासुकिवैद्युतानां रुद्राणां स्थाने स्वतेजसा भानि । रजतानां रुद्राणां
स्थाने स्वतेजसा भानि । परुषाणां रुद्राणां स्थाने स्वतेजसा भानि ।
श्यामानां रुद्राणां स्थाने स्वतेजसा भानि । कपिलानां रुद्राणां स्थाने
स्वतेजसा भानि । अतिलोहितानां रुद्राणां स्थाने स्वतेजसा भानि ।
ऊर्ध्वानां रुद्राणां स्थाने स्वतेजसा भानि । [69]

11702

अवपतन्तानां रुद्राणां स्थाने स्वतेजसा भानि । वैद्युतानां
रुद्राणां स्थाने स्वतेजसा भानि । प्रभ्राजमानीनां रुद्राणीनां स्थाने
स्वतेजसा भानि। व्यवदातीनां रुद्राणीनां स्थाने स्वतेजसा भानि ।
वासुकिवैद्युतीनां रुद्राणीनां स्थाने स्वतेजसा भानि । रजतानां रुद्राणीनां
स्थाने स्वतेजसा भानि । परुषाणां रुद्राणीनां स्थाने स्वतेजसा भानि ।
श्यामानां रुद्राणीनां स्थाने स्वतेजसा भानि । कपिलानां रुद्राणीनां
स्थाने स्वतेजसा भानि । अतिलोहितीनां रुद्राणीनां स्थाने स्वतेजसा भानि ।
ऊर्ध्वानां रुद्राणीनां स्थाने स्वतेजसा भानि । अवपतन्तीनां रुद्राणीनां
स्थाने स्वतेजसा भानि । वैद्युतीनां रुद्राणीनां स्थाने स्वतेजसा भानि ।
ओँभूर्भवस्स्वः । रूपाणि वो मिथुनं मा नो मिथुनं रीढ्वम् ।। [70]

11700

ऊर्ध्वानां रुद्राणां स्थाने स्वतेजसा भान्यतिलोहितीनां रुद्राणीनां स्थाने
स्वतेजसा भानि पञ्च च ।17।

11801

अथाग्नेरष्टपुरुषस्य । अग्नेः पूर्वदिश्यस्य स्थाने स्वतेजसा भानि ।
जातवेदस उपदिश्यस्य स्थाने स्वतेजसा भानि । सहोजसो दक्षिणदिश्यस्य स्थाने
स्वतेजसा भानि । अजिराप्रभव उपदिश्यस्य स्थाने स्वतेजसा भानि ।
वैश्वानरस्यापरदिश्यस्य स्थाने स्वतेजसा भानि । नर्यापस उपदिश्यस्य स्थाने
स्वतेजसा भानि । पङ्क्तिराधस उदग्दिश्यस्य स्थाने स्वतेजसा भानि ।
विसर्पिण उपदिश्यस्य स्थाने स्वतेजसा भानि । ओँभूर्भुवस्स्वः । दिशो वो
मिथुनं मा नो मिथुनं रीढ्वम् ।।[71]

11800

स्वरेकञ्च ।।

एतद्रश्मय आपो रूपाणि दिशः पञ्च ।18।
11901
दक्षिणपूर्वस्यान्दिशि विसर्पी नरकः । तस्मान्नः परिपाहि ।
दक्षिणापरस्यान्दिश्यविसर्पी नरकः । तस्मान्नः परिपाहि ।
उत्तरपूर्वस्यान्दिशि विषादी नरकः । तस्मान्नः परिपाहि ।
उत्तरापरस्यान्दिश्यविषादी नरकः । तस्मान्नः परिपाहि । आ यस्मिन्थ्सप्त
वासवा इन्द्रियाणि शतक्रतवित्येते ।। [72]
11900
दक्षिणपूर्वस्यान्नव ।19।
12001 इन्द्रघोषा वो वसुभिः पुरस्तादुपदधताम् । मनोजवसो वः
पितृभिर्दक्षिणत उपदधताम् । प्रचेता वो रुद्रैः पश्चादुपदधताम् ।
विश्वकर्मा व आदित्यैरुत्तरत उपदधताम् । त्वष्टा वो
रूपैरुपरिष्टादुपदधताम् । संज्ञानँव्वः पश्चादिति ।
आदित्यस्सर्वोग्निः पृथिव्याम् । वायुरन्तरिक्षे । सूर्यो दिवि ।
चन्द्रमा दिक्षु । नक्षत्राणि स्वलोके । एवाह्येव । एवाह्यग्ने ।
एवा हि वायो । एवाहीन्द्र । एवा हि पूषन् । एवा हि देवाः । [73]
12000
दिक्षु सप्त च ।20।
12101
आपमापामपस्सर्वाः । अस्मादस्मादितोऽमुतः । अग्निर्वायुश्च
सूर्यश्च । सहसञ्चस्कुरर्धिया । वाय्वश्वा रश्मिपतयः । मरीच्यात्मानो
अद्रुहः । देवीर्भुवनसूवरीः । पुत्रवत्त्वाय मे सुत ।
महानाम्नीर्महामानाः । महसो महसस्स्वः । [74]
12102
देवीः पर्जन्यसूवरीः । पुत्रवत्त्वाय मे सुत ।
अपाश्न्युष्णिमपारक्षः । अपाश्न्युष्णिमपारघम् । अपाघ्रामप
चावर्तिम् । अप देवीरितोहित । वज्रन्देवीरजीतांश्च ।
भुवनन्देवसूवरीः । आदित्यानदितिन्देवीम् । योनिनोर्ध्वमुदीषत । [75]
12103
भद्रं कर्णेभिः शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिः । व्यशेम देवहितं यदायुः ।

स्व॒स्ति न॒ इन्द्रो॑ वृ॒द्धश्र॑वाः । स्व॒स्ति नः॑ पू॒षा वि॒श्ववे॑दाः ।
स्व॒स्ति न॒स्तार्क्ष्यो॒ अरि॑ष्टनेमिः । स्व॒स्ति नो॒ बृह॒स्पति॑र्दधातु ।
के॒तवो॒ अरु॑णासश्च । ऋ॒षयो॒ वात॑रश॒नाः । प्र॒ति॒ष्ठाꣳ श॒तधा॑ हि ।
स॒माहि॑तासो सहस्र॒धाय॑सम् । शि॒वा न॒श्शन्त॑मा भवन्तु । दि॒व्या आप॒ ओष॑धयः ।
सु॒मृ॒डी॒का सर॑स्वति । मा ते॒ व्यो॑म स॒न्दृशि॑ । [76]
12100
स्व॑रु॒दीष॑त॒ वात॑रश॒नाष्षट्च॑ ।21।
12201
यो॑ऽपां पुष्प॒व्वेँद॑ । पुष्प॑वान्प्र॒जावा॑न्पशु॒मान्भ॑वति ।
च॒न्द्रमा॒ वा अ॒पां पुष्प॑म् । पुष्प॑वान्प्र॒जावा॑न्पशु॒मान्भ॑वति ।
य ए॒वव्वेँद॑ । यो॑ऽपामा॒यतन॒व्वेँद॑ । आ॒यत॑नवान्भवति । अ॒ग्निर्वा
अ॒पामा॒यत॑नम् । आ॒यत॑नवान्भवति । यो॑ऽग्नेरा॒यत॑न॒व्वेँद॑ । [77]
12202
आ॒यत॑नवान्भवति । आपो॒ वा अ॒ग्नेरा॒यत॑नम् । आ॒यत॑नवान्भवति ।
य ए॒वव्वेँद॑ । यो॑ऽपामा॒यत॑न॒व्वेँद॑ । आ॒यत॑नवान्भवति । वा॒युर्वा
अ॒पामा॒यत॑नम् । आ॒यत॑नवान्भवति । यो वा॒योरा॒यत॑न॒व्वेँद॑ ।
आ॒यत॑नवान्भवति । [78]
12203
आपो॒ वै वा॒योरा॒यत॑नम् । आ॒यत॑नवान्भवति । य ए॒वव्वेँद॑ ।
यो॑ऽपामा॒यत॑न॒व्वेँद॑ । आ॒यत॑नवान्भवति । अ॒सौ वै तप॑न्न॒पामा॒यत॑नम् ।
आ॒यत॑नवान्भवति । यो॑ऽमुष्य॒ तप॑त आ॒यत॑न॒व्वेँद॑ । आ॒यत॑नवान्भवति ।
आपो॒ वा अ॒मुष्य॒ तप॑त आ॒यत॑नम् । [79]
12204
आ॒यत॑नवान्भवति । य ए॒वव्वेँद॑ । यो॑ऽपामा॒यत॑न॒व्वेँद॑ ।
आ॒यत॑नवान्भवति । च॒न्द्रमा॒ वा अ॒पामा॒यत॑नम् । आ॒यत॑नवान्भवति ।
यश्च॒न्द्रम॑स आ॒यत॑न॒व्वेँद॑ । आ॒यत॑नवान्भवति । आपो॒ वै च॒न्द्रम॑स
आ॒यत॑नम् । आ॒यत॑नवान्भवति । [80]
12205
य ए॒वव्वेँद॑ । यो॑ऽपामा॒यत॑न॒व्वेँद॑ । आ॒यत॑नवान्भवति । नक्ष॑त्राणि॒
वा अ॒पामा॒यत॑नम् । आ॒यत॑नवान्भवति । यो नक्ष॑त्राणामा॒यत॑न॒व्वेँद॑ ।
आ॒यत॑नवान्भवति । आपो॒ वै नक्ष॑त्राणामा॒यत॑नम् । आ॒यत॑नवान्भवति ।

य ए॒वव्वेँ॑द । [81]
12206
यो॑ऽपामा॒यत॑न॒व्वेँद॑ । आ॒यत॑नवान्भवति । प॒र्जन्यो॒ वा अ॒पामा॒यत॑नम् ।
आ॒यत॑नवान्भवति । यः प॒र्जन्य॑स्या॒यत॑न॒व्वेँद॑ । आ॒यत॑नवान्भवति । आपो॒ वै
प॒र्जन्य॑स्या॒यत॑नम् । आ॒यत॑नवान्भवति । य ए॒वव्वेँ॑द । यो॑ऽपामा॒यत॑न॒व्वेँद॑ । [82]
12207
आ॒यत॑नवान्भवति । स॒व्वँ॒थ्स॒रो वा अ॒पामा॒यत॑नम् । आ॒यत॑नवान्भवति ।
यस्स॑व्वँथ्स॒रस्या॒यत॑न॒व्वेँद॑ । आ॒यत॑नवान्भवति । आपो॒ वै
स॑व्वँथ्स॒रस्या॒यत॑नम् । आ॒यत॑नवान्भवति । य ए॒वव्वेँ॑द । यो᳚ऽफ्सु नाव॒ं
प्रति॑ष्ठिता॒व्वेँद॑ । प्रत्ये॒व ति॑ष्ठति । [83]
12208
इ॒मे वै लो॒का अ॒फ्सु प्रति॑ष्ठिताः । तदे॒षाऽभ्यनू᳚क्ता । अ॒पाꣳ
रस॒मुद॑यꣳसन् । सूर्ये॑ शु॒क्रꣳ स॒माभृ॑तम् । अ॒पाꣳ रस॑स्य॒ यो रस॑ः । तव्वोँ॑
गृह्णाम्युत्त॒ममिति॑ । इ॒मे वै लो॒का अ॒पाꣳ रस॑ः । ते॑ऽमुष्मि॑न्नादि॒त्ये
स॒माभृ॑ताः । जा॒नु॒द॒घ्नीमु॑त्तरवे॒दीङ्खा॒त्वा । अ॒पां पू॑रयि॒त्वा
गु॑ल्फद॒घ्नम् । [84]
12209
पुष्करपर्णैः पुष्करदण्डैः पुष्करैश्च॑ सस्ती॒र्य । तस्मि॑न्विहा॒यसे ।
अ॒ग्निं प्र॒णीयो॑पसमा॒धाय॑ । ब्र॒ह्म॒वा॒दिनो॑ वदन्ति ।
कस्मा᳚त्प्र॒णी॒तेयम॒ग्निश्चीयते । साप्र॑णी॒तेऽयम॒फ्सु ह्यय॑ञ्ची॒यते᳚ ।
अ॒सौ भुव॑ने॒ऽप्यना॑हिताग्निरे॒ताः । तम॒भित॑ ए॒ता अ॒बीष्ट॑का॒ उप॑दधाति ।
अ॒ग्नि॒हो॒त्रे द॑र्शपूर्णमा॒सयोः᳚ । प॒शु॒ब॒न्धे चा॑तु॒र्मा॒स्ये॒षु । [85]
12210
अथो॑ आहुः । सर्वे॑षु यज्ञक्रतुष्विति॑ । ए॒तद्ध॑ स्म॒ वा
आ॑हुश्शण्डि॒लाः । कम॒ग्निञ्चि॑नुते । स॒त्रि॒यम॒ग्निञ्चि॑न्वा॒नः ।
स॒व्वँ॒थ्स॒रं प्र॒त्यक्षे॑ण । कम॒ग्निञ्चि॑नुते । सा॒वि॒त्रम॒ग्निञ्चि॑न्वा॒नः ।
अ॒मुमा॑दि॒त्यं प्र॒त्यक्षे॑ण । कम॒ग्निञ्चि॑नुते । [86]
12211
ना॒चि॒के॒तम॒ग्निञ्चि॑न्वा॒नः । प्रा॒णान्प्र॒त्यक्षे॑ण ।
कम॒ग्निञ्चि॑नुते । चा॒तु॒र्हो॒त्रि॒यम॒ग्निञ्चि॑न्वा॒नः । ब्रह्म॑
प्र॒त्यक्षे॑ण । कम॒ग्निञ्चि॑नुते । वै॒श्व॒सृ॒जम॒ग्निञ्चि॑न्वा॒नः । शरी॑रं

प्र॒त्यक्षे॑ण । कम॒ग्निञ्चि॑नुते । उ॒पा॒नु॒वा॒क्य॑मा॒शुम॒ग्निञ्चि॑न्वा॒नः । [87]
12212
इ॒माल्लोँ॒कान्प्र॒त्यक्षे॑ण । कम॒ग्निञ्चि॑नुते ।
इ॒ममा॑रुणकेतुकम॒ग्निञ्चि॑न्वा॒न इति॑ । य ए॒वासौ । इ॒तश्चा॒मुत॑श्चाव्यतीपा॒ती ।
तमिति॑ । यो॑ऽग्नेर्मि॑थू॒या वेद॑ । मि॒थु॒नवा॒न्भ॑वति । आपो॒ वा
अ॒ग्नेर्मि॑थू॒याः । मि॒थु॒नवा॒न्भ॑वति । य ए॒वव्वेँद॑ ।। [88]
12200
वेद॑ भवत्या॒यत॑नमा॒यत॑नवान्भवति॒ य ए॒वव्वेँदु॒ वेद॑ तिष्ठति
गुल्फद॒घ्नञ्चा॑तुर्मा॒स्येष्व॒मुमा॑दि॒त्यं प्र॒त्यक्षे॑ण॒
कम॒ग्निञ्चि॑नुत उपानु॒वा॒क्य॑मा॒शुम॒ग्निञ्चि॑न्वा॒नो मि॑थू॒या
मि॑थुन॒वान्भ॑व॒त्येक॑ञ्च ।।
पुष्प॑म॒ग्निर्वा॒युर॒सौ वै तप॑श्चन्द्रमा॒ नक्ष॑त्राणि प॒र्जन्य॑स्सव्वँथ्स॒रस्ति॑ष्ठति
सत्रि॒यः स॑व्वँथ्स॒रः सा॑वि॒त्रम॒मुन्ना॑चिके॒तं प्रा॒णाः श्चा॑तुर्॒होत्रि॒यं
ब्रह्म॑ वैश्वसृ॒जः शरी॑रमुपानु॒वा॒क्य॑मा॒शुमि॒माल्लोँ॒कानि॒ममा॑रुणकेतु॒कं
य ए॒वासौ ।22।
12301
आपो॒ वा इ॒दमा॑सन्थ्सलि॒लमे॒व । स प्र॒जाप॑ति॒रेकः॑ पुष्करप॒र्णे
सम॑भवत् । तस्या॒न्तर्मन॑सि काम॒स्सम॑वर्तत । इदः सृ॑जेय॒मिति॑ ।
तस्मा॒द्यत्पुरु॑षो॒ मन॑साऽभि॒गच्छ॑ति । तद्वा॒चा व॑दति । तत्कर्म॑णा करोति ।
तदे॒षाऽभ्यनू॑क्ता । काम॒स्तदग्रे॒ सम॑वर्त॒ताधि॑ । मन॑सो॒ रेतः॑
प्रथ॒मय्यँ॑दासी॑त् । [89]
12302
स॒तो बन्धु॒मस॑ति॒ निर॑विन्दन् । हृ॒ति प्र॒दीष्या॑ कु॒वयो॑ मनी॒षेति॑ ।
उपै॑न॒न्तदु॒प॑नमति । यत्का॑मो॒ भव॑ति । य ए॒वव्वेँद॑ । स तपो॑ऽतप्यत ।
स तप॑स्त॒प्त्वा । शरी॑रमधूनुत । तस्य॒ यन्मा॒ःसमासी॑त् । ततो॑ऽरु॒णाः
के॒तवो॒ वात॑रश॒ना ऋष॑य॒ उद॑तिष्ठन् । [90]
12303
ये नखाः॑ । ते वैखा॒नसाः । ये वालाः॑ । ते वा॑लखि॒ल्याः । यो रसः॑ ।
सो॑ऽपाम् । अ॒न्त॒र॒तः कू॒र्मं भूतः सर्प॑न्तम् । तम॑ब्रवीत् । मम॒ वै
त्वङ्मा॒ःसा । सम॑भूत् । [91]
12304

नेत्य॑ब्रवीत्। पूर्वं॑मे॒वाहमि॒हास॒मिति॑ । तत्पुरु॑षस्य पुरुष॒त्वम् ।
स स॒हस्र॑शीर्॒षा पुरु॑षः । स॒ह॒स्रा॒क्षस्स॒हस्र॑पात् । भू॒त्वोद॑तिष्ठत् ।
तम॑ब्रवीत् । त्वव्वै पूर्वꣳ॑ सम॑भूः । त्वमि॒दं पूर्वः॑ कुरु॒ष्वेति॑ । स इ॒त
आ॒दायाप॑ः । [92]
12304
अ॒ञ्जलिना॑ पु॒रस्ता॑दु॒पाद॑धात् । ए॒वाह्येवेति॑ । तत॑ आदि॒त्य उद॑तिष्ठत् । सा प्राची॒ दिक् । अथा॑रु॒णः
के॒तुर्द॑क्षिण॒त उ॒पाद॑धात् । ए॒वाह्यग्न इति॑ । तत॒ो वा अ॒ग्निरुद॑तिष्ठत् । सा द॑क्षि॒णा दिक् । अथा॑रु॒णः
के॒तुः
प॒श्चादु॒पाद॑धात् । ए॒वा हि वा॒यो इति॑ । [93]
12305
ततो॑ वा॒युरुद॑तिष्ठत् । सा प्र॒तीची॒ दिक् । अथा॑रु॒णः
के॒तुरु॑त्तर॒त उ॒पाद॑धात् । ए॒वाहीन्द्रेति॑ । तत॒ो वा इन्द्र॒ उद॑तिष्ठत् । सोदी॑ची॒ दिक् । अथा॑रु॒णः
के॒तुर्मध्य॑
उ॒पाद॑धात् । ए॒वाहि पू॒ष॒न्निति॑ । तत॒ो वै पू॒षोद॑तिष्ठत् । सेयन्दिक् । [94]
12306
अथा॑रु॒णः के॒तुरु॒परि॑ष्टादु॒पाद॑धात् ।
ए॒वा हि दे॑वा॒ इति॑ । ततो॑ देवमनु॒ष्याः पि॒तरः॑ । ग॒न्ध॒र्वा॒प्स॒र॒सश्चोद॑तिष्ठन् । सोर्ध्वा दिक् । या
वि॒प्रुषो॑ वि॒परा॑पतन् ।
ताभ्योऽसु॒रा रक्षाꣳ॑सि पिशा॒चाश्चोद॑तिष्ठन् । तस्मा॒त्ते परा॑ऽभवन् । वि॒प्रुड्भ्यो॒ हि ते सम॑भवन् ।
तदे॒षाऽभ्यनू॑क्ता । [95]
12307
आपो॑ ह॒ यद्बृ॑ह॒तीर्गर्भ॒मायन्न् । दक्ष॒न्दधा॑ना ज॒नय॑न्तीस्स्वय॒म्भुम् । तत॑ इ॒मेऽध्यसृ॑ज्यन्त॒
सर्गाः॑ । अ॒द्भ्यो वा इ॒दꣳ सम॑भूत् ।
तस्मा॑दि॒दꣳ सर्व॒ं ब्रह्म॑ स्वयं॒भ्विति॑ । तस्मा॑दि॒दꣳ सर्व॒ꣳ॒ शिथि॑लमि॒वाऽध्रुव॑मिवाभवत्
। प्र॒जाप॑ति॒र्वाव तत् । आ॒त्मना॒ऽऽत्मान॑व्विँ॒धाय॑ ।
तदे॒वानु॒ प्रावि॑शत् । तदे॒षाऽभ्यनू॑क्ता । [96]
12308
वि॒धाय॑ लो॒कान् वि॒धाय॑ भू॒तानि॑ । वि॒धाय॒ सर्वाः॑ प्र॒दिशो॒ दिश॑श्च ।
प्र॒जाप॑तिः प्रथम॒जा ऋ॒तस्य॑ । आ॒त्मना॒ऽऽत्मान॑म॒भि सव्विँ॑वे॒शेति॑ । सर्वं॑मे॒वेदमा॒प्त्वा
। सर्वं॑मव॒रुध्य॑ । तदे॒वानु॒ प्रवि॑शति ।
य ए॒वव्वेँद॑ ।। [97]

12300
आसी॑दतिष्ठन्नभू॒दपो॒ वायो॒ इति॒ सेयन्दि॒गभ्यनू॑क्ता॒ऽभ्यनू॑क्ताष्टौ च॑ ।23।।
12401
चतु॑ष्टय्य॒ आपो॑ गृह्णाति । च॒त्वारि॒ वा अ॒पाꣳ रू॒पाणि॑ । मेघो॑
वि॒द्युत् । स्त॒न॒यि॒त्नुर्वृ॒ष्टिः । तान्ये॒वाव॑ रुन्धे ।
आ॒तप॑ति॒ वर्ष्या॑ गृह्णाति । ताः पु॒रस्ता॒दुप॑दधाति । ए॒ता वै
ब्र॑ह्मवर्च॒स्या आप॑ः । मु॒ख॒त ए॒व ब्र॑ह्मवर्च॒समव॑रुन्धे । तस्मा॑न्मु॒ख॒तो ब्र॑ह्मवर्च॒सित॑रः । [98]
12402
कूप्या॑ गृह्णाति । ता द॑क्षिण॒त उप॑दधाति । ए॒ता वै तै॑ज॒स्विनी॒राप॑ः । तेज॑ ए॒वास्य॑ दक्षिण॒तो
द॑धाति । तस्मा॒द्दक्षि॒णोऽर्धः॑स्तेज॒स्वित॑रः ।
स्था॒व॒रा गृ॑ह्णाति । ताः प॒श्चादुप॑दधाति । प्रति॑ष्ठिता॒ वै स्था॑व॒राः । प॒श्चादे॒व प्रति॑तिष्ठति ।
वह॑न्तीर्गृह्णाति । [99]
12403
ता उ॑त्तर॒त उप॑दधाति । ओज॑सा॒ वा ए॒ता वह॑न्तीरि॒वोद्व॑तीरि॒व आकूज॑तीरि॒व धाव॑न्तीः । ओज॑
ए॒वास्यो॑त्तर॒तो
द॑धाति । तस्मा॒दुत्त॒रोऽर्धः॑ ओज॒स्वित॑रः । सं॒भा॒र्या गृ॑ह्णाति । ता मध्य॒ उप॑दधाति । इ॒यव्वैँ सं॑भा॒र्याः ।
अ॒स्यामे॒व
प्रति॑तिष्ठति । प॒ल्व॒ल्या गृ॑ह्णाति । ता उ॒परि॑ष्टादु॒पाद॑धाति । [100]
12404
अ॒सौ वै प॑ल्व॒ल्याः । अ॒मुष्या॑मे॒व प्रति॑तिष्ठति ।
दि॒क्षूप॑दधाति । दि॒क्षु वा आप॑ः । अ॒न्नव्वाँ आप॑ः । अ॒द्भ्यो वा अन्न॑ञ्जायते । यदे॒वाद्भ्योऽन्न॒ञ्जाय॑ते
। तदव॑रुन्धे । तव्वाँ ए॒तम॑रु॒णाः
के॒तवो॒ वात॑रश॒ना ऋषयो॑।
॑चिन्वन्न् । तस्मा॑दारुणके॒तुक॑ः ।[101]
12405
तदे॒षाऽभ्यनू॑क्ता ।के॒तवो॒ अरु॑णासश्च । ऋ॒ष॒यो वात॑रश॒नाः । प्र॒ति॒ष्ठाꣳ श॒तधा॑हि ।
स॒माहि॑तासो सहस्र॒धाय॑स॒मिति॑ । श॒तश॑श्चैव स॒हस्र॑शश्च॒ प्रति॑तिष्ठति । य ए॒तम॒ग्निञ्चि॑नु॒ते । य उ॑
चैनमे॒वव्वेदं॑ ।। [102]
12400
ब्र॒ह्म॒व॒र्च॒सित॑र॒ो वह॑न्तीर्गृह्णाति॒ ता उ॒परि॑ष्टादु॒पाद॑धात्यारुणके॒तु॒कोऽष्टौ च॑ ।24।।
12501
जा॒नु॒द॒घ्नीमु॑त्तरवे॒दीङ्खा॒त्वा । अ॒पां पू॑रयति । अ॒पाꣳ स॑र्व॒त्वाय॑ ।

पुष्क॒र॒प॒र्णꣳ रु॒क्मं पुरु॑ष॒मित्यु॑प॑दधाति । तपो॑ वै पुष्करप॒र्णम् ।
स॒त्यꣳ रु॒क्मः । अ॒मृतं॑ पुरु॑षः । ए॒ताव॒द्वावा॑स्ति । याव॑दे॒तत् ।
याव॑दे॒वास्ति॑ । [103]
12502
तदव॑रुन्धे । कू॒र्ममुप॑दधाति । अ॒पामे॒व मेध॒मव॑रुन्धे । अ
थो॑ स्व॒र्गस्य॑ लो॒कस्य॒ सम॑ष्ट्यै । आप॑मापाम॒पस्सर्वाः॑ । अ॒स्माद॒स्मादि॒तो
ऽमुतः॑ । अ॒ग्निर्वा॒युश्च॒ सूर्य॑श्च । स॒हस॑ञ्चस्क॒रर्धि॑या इति॑ ।
वा॒य्वश्वा॑ रश्मि॒पत॑यः । लो॒कं पृ॑ण च्छि॒द्रं पृ॑ण । [104]
12503
यास्ति॒स्रः प॑रम॒जाः ।
इ॒न्द्र॒घो॒षा वो॒ वसु॑भिरे॒वाह्वे॒वेति॑ । पञ्च॒ चित॑य॒ उप॑दधाति ।
पाङ्क्तो॒ऽग्निः । यावा॑ने॒वाग्निः । तञ्चि॑नुते । लो॒कम्पृ॑णया
द्वि॒तीया॒मुप॑दधाति । पञ्च॑पदा॒ वै वि॒राट् । तस्या॒ वा इ॒यं पाद॑ः । अ॒न्तरि॑क्षं॒
पाद॑ः । द्यौः पाद॑ः । दिश॒ः पाद॑ः । प॒रोर॑जाः पाद॑ः । वि॒राज्ये॒व प्रति॑तिष्ठति ।
य ए॒तम॒ग्निञ्चि॑नु॒ते । य उ॑चैनमे॒वव्वेद॑ ।। [105]
12500
अस्ति॑ पृण॒ान्तरि॑क्षं॒ पाद॒ष्षट्च॑ ।25।
12601
अ॒ग्निं प्र॒णीयो॑पसमा॒धाय॑ । तम॒भित॑ ए॒ता अ॒बीष्ट॑का॒ उप॑दधाति ।
अ॒ग्नि॒हो॒त्रे द॑र्शपूर्णमा॒सयोः॑ । प॒शु॒ब॒न्धे चा॑तु॒र्मा॒स्येषु॑ । अथो॑
आहुः । सर्वे॑षु यज्ञक्र॒तुष्विति॑ । अथ॑ ह स्मा हारु॒णस्स्वा॑यं॒भुव॑ः ।
सा॒वि॒त्रः सर्वो॒ऽग्निरित्यन॑नुषङ्गं मन्यामहे । नाना॒ वा ए॒तेषा॑व्वी॒र्या॑णि ।
कम॒ग्निञ्चि॑नुते । [106]
12602
स॒त्रि॒यम॒ग्निञ्चि॑न्वा॒नः । कम॒ग्निञ्चि॑नुते ।
सा॒वि॒त्रम॒ग्निञ्चि॑न्वा॒नः । कम॒ग्निञ्चि॑नुते । ना॒चि॒के॒तम॒ग्निञ्चि॑न्वा॒नः ।
कम॒ग्निञ्चि॑नुते । चा॒तु॒र्हो॒त्रि॒यम॒ग्निञ्चि॑न्वा॒नः । कम॒ग्निञ्चि॑नुते ।
वै॒श्व॒सृ॒जम॒ग्निञ्चि॑न्वा॒नः । कम॒ग्निञ्चि॑नुते । [107]
12603
उ॒पा॒नु॒वा॒क्य॑मा॒शु
म॒ग्निञ्चि॑न्वानः । कम॒ग्निञ्चि॑नुते । इ॒मम॑ारुणकेतुकम॒ग्निञ्चि॑न्वा॒न इति॑ ।

वृषा॒ वा अ॒ग्निः । वृषा॑णौ॒ सस्फा॑लयेत् । ह॒न्येता॑स्य य॒ज्ञः । तस्मा॒न्नानु॒
षज्यः॑ । सोत्त॑रवे॒दिषु॑ क्र॒तुषु॑ चिन्वीत । उ॒त्त॒र॒वे॒द्याꣳ ह्य॑ग्निश्ची॒यते᳚ ।
प्र॒जाका॑मश्चिन्वीत । [108]
12604
प्रा॒जा॒प॒त्यो वा ए॒षो᳚ऽग्निः । प्रा॒जा॒प॒त्याः
प्र॒जाः । प्र॒जावा᳚न्भवति । य ए॒वव्वेँद॑ । प॒शुका॑मश्चिन्वीत । सं॒ज्ञान॒व्वाँ
ए॒तत्प॑शू॒नाम् । यदापः॑ । प॒शू॒नामे॒व सं॒ज्ञाने॒ऽग्निश्चि॑नुते । प॒शु॒मान्
भ॑वति । य ए॒वव्वेँद॑ । [109]
12605
वृष्टि॑कामश्चिन्वीत । आपो॒ वै वृष्टिः॑ ।
प॒र्जन्यो॒ वर्षु॑को भवति । य ए॒वव्वेँद॑ । आ॒म॒या॒वी चि॑न्वीत । आपो॒ वै भे॑ष॒जम् ।
भे॒ष॒जमे॒वास्मै॑ करोति । सर्व॒मायु॑रेति । अ॒भि॒चर॑श्चिन्वीत । वज्रो॒ वा आपः॑ । [110]
12606
वज्र॑मे॒व भ्रातृ॑व्येभ्यः॒ प्रह॑रति । स्तृ॒णु॒त ए॑नम् । तेज॑स्कामो॒ यश॑स्कामः ।
ब्र॒ह्म॒व॒र्च॒सका॑मः स्व॒र्गका॑मश्चिन्वीत । ए॒ताव॒द्वावा᳚स्ति । याव॑दे॒तत् ।
याव॑दे॒वास्ति॑ । तदव॑रुन्धे । तस्यै॒तद्व्र॒तम् । वर्ष॑ति॒ न धा॑वेत् ।[111]।
12607
अ॒मृ॒तव्वाँ आपः॑ । अ॒मृ॒तस्यान॑न्तरित्त्यै । नाफ्सु मूत्र॑पु॒रीषङ्कु॑र्यात् ।
न निष्ठी॑वेत् । न वि॒वस॑नस्स्नायात् । गुह्यो॒ वा ए॒षो᳚ऽग्निः । ए॒तस्या॒ग्ने
रन॑तिदाहाय । न पु॑ष्करप॒र्णानि॒ हिर॑ण्यं॒ वाऽधि॒तिष्ठे᳚त् । ए॒तस्या॒ग्नेरन॑
भ्यारोहाय । न कू॒र्मस्याश्नी॑यात् । नोद॒कस्या॒घातु॑का॒न्येन॑मोद॒कानि॑ भवन्ति ।
अ॒घातु॑का॒ आपः॑ । य ए॒तम॒ग्निञ्चि॑नु॒ते । य उ॑ चैनमे॒वव्वेँद॑ । [112]
12600
चि॒नु॒ते॒ चि॒नु॒ते॒ प्र॒जाका॑मश्चिन्वी॒त॒ य ए॒वव्वेँदापो॑ धावे॒दश्नी॑याच्च॒त्वारि॑ च ।26।
12701
इ॒मानु॑कं॒ भुव॑ना सीषधेम । इन्द्र॑श्च॒ विश्वे॑ च दे॒वाः । य॒ज्ञञ्च॑ नस्त॒न्वञ्च॑
प्र॒जाञ्च॑ । आ॒दि॒त्यैरिन्द्र॑स्स॒ह सीषधातु । आ॒दि॒त्यैरिन्द्र॒स्सग॑णो
म॒रुद्भिः॑ । अ॒स्माकं॑ भूत्वववि॒ता त॒नूना᳚म् । आप्ल॑वस्व॒ प्रप्ल॑वस्व । आ॒ण्डी
भव ज॒मामु॒हुः । सुखादीन्दुः॑खनि॒धनाम् । प्रति॑मुञ्चस्व॒ स्वां पु॒रम् । [113]
12702
मरी॑चयः स्वायम्भु॒वाः । ये श॑री॒राण्य॑कल्पयन् । ते ते॑ दे॒हङ्क॑ल्पयन्तु ।
मा च॑ ते॒ ख्यास्म॑तीरिषत् । उत्ति॑ष्ठत॒ मा स्व॑प्त । अ॒ग्निमि॑च्छध्वं॒

भार॑ताः । राज्ञः॒ सोम॑स्य तृ॒प्तास॑ः । सूर्ये॑ण स॒युजो॑षसः । युवा॑ सु॒वासा॑ः ।
अ॒ष्टाच॑क्रा नव॑द्वारा ।[114]
12703
दे॒वाना॒ं पूर॑यो॒ध्या । तस्या॑ं हिरण्म॑यः को॒शः ।
स्व॒र्गो लो॒को ज्योति॒षाऽऽवृ॑तः । यो वै तां॑ ब्रह्म॑णो वे॒द । अ॒मृते॑नावृ॒तां
पुरीम् । तस्मै॑ ब्रह्म च॑ ब्रह्मा॒ च । आ॒युः कीर्ति॑ं प्र॒जान्द॑दुः ।
वि॒भ्राज॑माना॒ं हरि॑णीम् । य॒शसा॑ संप॒रीवृ॑ताम् । पुर॑ं हिरण्म॑यीं ब्र॒ह्मा ।[115]
12704
वि॒वेशा॑प॒राजि॑ता । पराऽङेत्य॑ज्याम॒यी । पराऽङेत्य॑नाश॒की । इ॒ह चा॑मुत्र॑
चान्वे॒ति । वि॒द्वान्दे॑वासु॒राना॑भ॒यान् । यत्कु॑मा॒री म॒न्द्रय॑ते ।
य॒द्यो॒षिद्यत्प॑ति॒व्रता॑ । अरि॑ष्टं॒ यत्किञ्च॑ क्रि॒यते॑ । अ॒ग्निस्तदनु॑
वेधति । अ॒शृता॑सश्शृ॒तास॒श्च । [116]
12705
य॒ज्वानो॒ ये॒ऽप्य॑य॒ज्वन॑ः । स्व॑र्यन्तो॒
नापे॑क्षन्ते । इन्द्र॑म॒ग्निञ्च॑ ये वि॒दुः । सिक॑ता इव स॒य्यँन्ति॑ । र॒श्मिभि॑
स्समु॒दीरि॑ताः । अ॒स्माल्लो॒काद॑मुष्मा॒च्च । ऋ॒षिभि॑रदात्पृ॒श्निभि॑ः । अपे॑त॒
वीत॒ वि च॑ सर्प॒तात॑ः । येऽत्र॒ स्थ पु॑रा॒णा ये च॒ नूत॑नाः । अहो॑भिर॒द्भिर॒
क्तुभि॒र्व्यक्त॑म् । [117]
12706
य॒मो द॑दात्वव॒सान॑मस्मै । नृम॑ुणन्तु नृपा॒त्वर्य॑ः ।
अ॒कृ॒ष्टा ये च॒ कृष्ट॑जाः । कु॒मारी॑षु क॒नीनी॑षु । जा॒रिणी॑षु च॒ ये हि॒ताः ।
रेत॑ःपीता॒ आण्ड॑पीताः । अङ्गा॑रेषु च॒ ये हु॒ताः । उ॒भया॑न्पुत्र॑पौत्र॒कान् ।
यु॒वे॑ऽहय्यँ॒मराज॑गान् । श॒तमि॑न्नु श॒रद॑ः । [118]
12707
अद॒ो यद्ब्रह्म॑ विल॒बम् ।
पि॒तृ॒णाञ्च॑ य॒मस्य॑ च । वरु॑ण॒स्याश्वि॑नोर॒ग्नेः । म॒रुता॑ञ्च वि॒हाय॑साम् ।
का॒म॒प्रय॑वणम्मे अस्तु । स ह्ये॑वास्मि॑ स॒नात॑नः । इति नाको ब्रह्मिश्र॒वो॑
राय॒ो धनम् । पु॒त्रानापो॑ दे॒वीरि॒हाहि॑ता ।। [119]
12700
पु॒रन्नव॑द्वारा ब्र॒ह्मा च व्य॑क्तः श॒रदो॒ऽष्टौ च॑ ।।27।।
12801
विशी॑र्ष्णीङ्गृ॒ध्र॑शीर्ष्णी॒ञ्च । अपेतो॑ निर्ऋ॒तिः ह॑थः । परिबाध श्वे॑तकु॒क्षम् ।

नि॒जङ्घ॑ꣳ श॒ब॒लोद॑रम् । सु॒तान् वा॒च्याय॑या स॒ह । अ॒ग्ने नाश॑य स॒न्दृश॑ः ।
ई॒र्ष्या॒सू॒ये बु॑भु॒क्षाम् । म॒न्युङ्कृ॒त्याञ्च॑ दीधिरे । रथे॑न किꣳशु॒काव॑ता ।
अ॒ग्ने नाश॑य स॒न्दृश॑ः । [120]
12800
।।28।।
12901
प॒र्जन्या॑य॒ प्रगा॑यत । दि॒वस्पु॒त्राय॑ मी॒ढुषे᳚ । स नो॑ य॒वस॑मिच्छतु ।
इ॒दव्वँच॑ः प॒र्जन्या॑य स्व॒राजे᳚ । हृ॒दो अ॒स्त्वन्त॑र॒न्तद्यु॑योत । म॒यो॒भूर्
वातो॑ वि॒श्वकृ॑ष्टयस्सन्त्व॒स्मे । सु॒पि॒प्प॒ला ओष॑धीर्दे॒वगो॑पाः । यो गर्भ॒
मोष॑धीनाम् । गवा᳚ङ्कृ॒णोत्यर्व॑ताम् । प॒र्जन्य॑ः पुरु॒षीणा᳚म् ।। [121]
12900
विशी᳚र्णी प॒र्जन्या॑य॒ दश॑दश।।29।।
13001
पुन॒र्मामै॑त्विन्द्रि॒यम् । पुन॒रायु॒ः पुन॒र्भग॑ः । पुन॒र्ब्राह्म॑णमैतु मा ।
पुन॒र्द्रवि॑णमैतु मा । यन्मे॒ऽद्य रेत॑ः पृथि॒वीमस्का॑न् । यदोष॑धीर॒प्यस॑र॒द्य
दाप॑ः । इ॒दन्तत्पुन॒राद॑दे । दी॒र्घा॒यु॒त्वाय॒ वर्च॑से । यन्मे॒ रेत॒ः
प्रसि॑च्यते । यन्म॒ आजा॑यते॒ पुन॑ः । तेन॑ माम॒मृत॑ङ्कुरु । तेन॑ सुप्र॒जस॑ङ्कुरु।। 122]
13000
पुन॒र्द्वे च॑ ।।30।।
13101
अ॒द्भ्यस्ति॒रो॒धाजा॑यत । तव॑ वैश्रव॒णस्स॑दा । तिरो॑धेहि सप॒त्नान्न॑ः ।
ये अ॒पोऽश्नन्ति॑ केच॒न । त्वा॒ष्ट्रीं मा॒याव्वैँ᳚श्रव॒णः । रथꣳ॑ सहस्र॒वन्धु॑रम् ।
पु॒रु॒श्च॒क्रꣳ सह॑स्राश्वम् । आस्था॒याया॑हि नो ब॒लिम् । यस्मै॑ भू॒तानि॑ ब॒लि
माव॑हन्ति । धन॒ङ्गावो॒ हस्ति॒हिर॑ण्य॒मश्वा॑न् । [123]
13102
असा॑म सुम॒तौ य॒ज्ञिय॑स्य ।
श्रियं॒ बिभ्र॒तोऽन्न॑मुखीं वि॒राज᳚म् । सु॒द॒र्श॒ने च॑ क्रौञ्चे च॑ । मै॒ना॒गे
च॑ म॒हागि॑रौ । स॒तद्वा॒ट्टार॑गम॒न्ता । सँ॒ꣳहार्य॒न्नग॑र॒न्तव॑ । इति मन्त्रा॑ः ।
कल्पो॑ऽत ऊ॒र्ध्वम् । यदि॒ बलिꣳ॒ हरे᳚त् । हि॒र॒ण्य॒ना॒भये॑ वितु॒दये॑ कौबे॒रा
या॒यं ब॑लिः । [124]
13103
सर्वभूताधिपतये॒ नम॑ इति । अथ बलिꣳ हृत्वोप॑तिष्ठेत ।

क्ष॒त्रङ्क्ष॒त्रव्वैँ॑श्रव॒णः । ब्राह्म॒णा॑ वय्॒ स्मः । नम॑स्ते अस्तु॒ मा मा॑
हि॑ꣳसीः । अस्मात्प्रविश्यान्न॑मद्धीति । अथ तमग्निमा॑दधी॒त । यस्मिन्नेतत्कर्म
प्र॑युञ्जी॒त । ति॒रोधा॒ भूः । ति॒रोधा॒ भुव॑ः । [125]
13104
ति॒रोधा॒स्स्व॑ः । ति॒रोधा॒
भूर्भुव॒स्स्व॑ः । सर्वे॑षाल्लो॒ँकानामाधिपत्यै॑ सीदे॒ति । अथ तमग्नि॑मिन्धी॒त ।
यस्मिन्नेतत्कर्म प्र॑युञ्जी॒त । ति॒रोधा॒ भूस्स्वाहा॑ । ति॒रोधा॒ भुव॒स्स्वाहा॑ ।
ति॒रोधा॒स्स्व॑स्स्वाहा॑ । ति॒रोधा॒ भूर्भुव॒स्स्व॑स्स्वाहा॑ । यस्मिन्नस्य काले
सर्वा॑ आहुतीर् हुता॑ भवे॒युः । [126]
13105
अपि ब्राह्मण॑मुखी॒नाः । तस्मिन्नह्नः काले
प्र॑युञ्जी॒त । पर॑स्सुप्तज॑नाद्वेपि । मा स्म प्रमाद्यन्त॑माध्या॒पयेत् ।
सर्वा॑र्थाँ॑स्सिध्य॒न्ते। य ए॑वव्वे॒ँद । क्षुध्यन्निद॑मजा॒नताम् । सर्वा॑र्था न॑
सिध्य॒न्ते । यस्ते॑ वि॒घातु॑को भ्रा॒ता । ममान्तर्हृ॑दये॒ श्रितः । [127]
13106
तस्मा॑ इ॒ममग्र॒पिण्ड॑ञ्जुहोमि । स मे॑ऽर्था॒न्मा विव॑धीत् । मयि॒ स्वाहा॑ । रा॒जा॒धि॒
रा॒जाय॑ प्रसह्यसा॒हिने॑ । नमो॑ व॒यव्वैँ॑श्रव॒णाय॑ कुर्महे । स मे॒ कामा॒न्काम॒
कामा॑य॒ मह्यँ॑म् । का॒मे॒श्व॒रो वैँ॑श्रव॒णो द॑दातु । कु॒बे॒राय॑ वैश्रव॒णाय॑ ।
म॒हा॒रा॒जाय॒ नम॑ः । के॒तवो॒ अरु॑णासश्च । ऋ॒ष॒यो वात॑रश॒नाः । प्र॒ति॒ष्ठाꣳ
श॒तधा॑हि । स॒मा॒हि॑तासो सहस्र॒धाय॑सम् । शि॒वा न॒श्शन्त॑मा भवन्तु । दि॒व्या आप॒
ओष॑धयः । सु॒मृ॒डी॒का सर॑स्वति । मा ते॒ व्यो॑म स॒न्दृशि॑ । [128]
13100
अश्वा॑न्बलि॒र्भुवो॑ भवे॒युश्श्रितश्च॑ स॒प्त च॑ ।31।
13201
सव्वँ॑थ्सरमेत॑द्व्रत॒ञ्चरेत् । द्वौ॑ वा मा॒सौ । नियमस्स॑मासे॒न । तस्मिन्नियम॑
विशे॒षाः । त्रिषवणमुदको॑पस्पृ॒र्शी । चतुर्थकालपान॑भक्त॒स्स्यात् । अहरहर्वा॑
भैक्ष॑मश्नी॒यात् । औदुम्बरीभिस्समिद्भिरग्नि॑ं परि॒चरेत् । पुनर्मा॑मैत्विन्द्रिय
मित्येतेनानु॑वाके॒न । उद्धृतपरिपूताभिरद्भिः कार्य॑ङ्कुर्वी॒त । [129]
13202
अ॑सञ्चयवान् ।
अग्नये वायवे॑ सूर्या॒य । ब्रह्मणे प्र॑जापतये । चन्द्रमसे न॑क्षत्रे॒भ्यः ।

ऋतुभ्यस्स॒व्वँ॑थ्स॒राय । वरुणायारुणायेति व्र॒॑तहो॒माः । प्र॒व॒र्ग्य॑व॑दादे॒शः ।
अरुणाः का॑ण्डऋ॒षयः । अरण्ये॑ऽधीयी॒रन्न् । भद्रङ्क॒र्णे॑भिरिति द्वे॑ जपि॒त्वा ।[130]
13203
महानाम्नीभिरुदकं॑ स॑स्प॒र्श्य । तमाचा॑र्यो द॒द्यात् । शिवा नश्शन्तमेत्यो
षधी॑राल॒भते । सुमृडीके॑ति भू॒मिम् । एवम॑पव॒र्गे । धे॑नुर्द॒क्षिणा । कं॑संव्वास॑श्च
क्षौ॒मम् । अन्य॑द्वा शु॒क्लम् । य॑थाश॒क्ति वा । एव स्वध्याय॑धर्मे॒ण । अरण्ये॑
ऽधीयी॒त । तपस्वी पुण्यो भवति तपस्वी पु॑ण्यो भ॒वति ।। [131]
13200
कु॒र्वी॒त ज॑पि॒त्वा स्वाध्याय॑धर्मे॒ण द्वे च॑ ।।32।।
10000
भ॒द्रस्मृति॑स्साकु॒ञ्ज्ञाना॒मक्ष्यति॑ ता॒म्राण्य॑त्यूर्ध्वा॒क्ष आरोगः क्वेद
मग्निश्च स॑हस्र॒वृत्प॒वित्र॑वन्त॒ आत॑नुष्वा॒ष्टयो॑नी॒य्यौँसावथादित्यस्यारोग
स्याथ वायोरथाग्नेर्दक्षिणपूर्वस्यामि॑न्द्रघो॒षा व॒ आप॑मापा॒य्यौँ॑पामापो॒ वै
चतु॑ष्टय्यो जानुद॒घ्नीम॒ग्निं प्र॒णीये॒मानु॑कु॒व्विशीर्॑ष्णी प॒र्जन्या॑य॒ पुन॑
रु॒द्ध्यस्सव्वँ॑थ्सरन्द्वात्रिँ॑॑शत् ।।32।।
भ॒द्रञ्ज्यो॒तिषा॒ तस्मिन्राजानङ्क॒श्यपा॑थ्सहस्र॒वृदि॑य॒न्नपुं॑स॑कम॒ष्टयो॑नी॒म
थाग्ने॒र्य ए॒वव्वे॒॑द॒ ये नखा॑ अ॒सौ वै प॑ल्व॒ल्या वज्र॑मे॒व प॒र्जन्या॑य॒
महानाम्नीभिरेकत्रिंशदुत्त॑रश॒तम् ।131।
भ॒द्रन्तपस्वी पुण्यो भवति तपस्वी पु॑ण्यो भ॒वति ।
इति तैत्तिरीयारण्यके प्रथमप्रश्नः समाप्तः ।

20000
द्वितीयप्रश्नप्रारम्भः ।
20101
सह वै देवानाञ्चासुराणाञ्च यज्ञौ प्रततावास्ताव्वँयस्वर्गल्लोकमेष्यामो वयमेष्याम्
इति तेऽसुरास्सन्नह्य सहसैवाचरन्ब्रह्मचर्येण
तपसैव देवास्तेऽसुरा अमुह्यस्ते न प्राजानस्ते पराऽभवन्ते न स्वर्गल्लोकमायन्
प्रसृतेन वै यज्ञेन देवास्स्वर्गल्लोकमायन्न प्रसृतेनासुरान्पराभा
वयन्प्रसृतो ह वै यज्ञोपवीतिनो यज्ञोऽप्रसृतोऽनुपवीतिनो यत्किञ्च ब्राह्मणो
यज्ञोपवीत्यधीते यजत एव तत्तस्माद्यज्ञोपवीत्येवाधीयीत
याजयेद्यजेत वा यज्ञस्य प्रसृत्या अजिनव्वाँसो वा दक्षिणत उपवीय दक्षिणं बाहुमुद्धरतेऽव
धत्ते सव्यमिति यज्ञोपवीतमेतदेव विपरीतं
प्राचीनावीतꣳ सव्वीँतं मानुषम् ।1।
20201
रक्षाꣳसि ह वा पुरोऽनुवाके तपोग्रमतिष्ठन्त तान्प्रजापतिर्वरेणोपामन्त्रयत तानि वरमवृणीतादित्यो नो
योद्धा इति
तान्प्रजापतिरब्रवीद्योधयध्वमिति तस्मादुत्तिष्ठन्तꣳ ह वा तानि रक्षाꣳस्यादित्यय्योधयन्ति
यावदस्तमन्वगात्तानि ह वा एतानि रक्षाꣳसि
गायत्रियाऽभिमन्त्रितेनांभसा शाम्यन्ति तदु ह वा एते ब्रह्मवादिनः पूर्वाभिमुखाः
सन्ध्यायाङ्गायत्रियाऽभिमन्त्रिता आप ऊर्ध्वं विक्षिपन्ति
ता एता आपो वज्रीभूत्वा तानि रक्षाꣳसि मन्देहारुणे द्वीपे प्रक्षिपन्ति यत्प्रदक्षिणं
प्रक्रमन्ति तेन पाप्मानमवधून्वन्त्युद्यन्तमस्तय्यँन्त
मादित्यमभिध्यायन्कुर्वन्ब्राह्मणो विद्वान्थ्सकलं भद्रमश्नुतेऽसावादित्यो
ब्रह्मेति ब्रह्मैव सन्ब्रह्माप्येति य एवव्वेँद2।
20301
यद्देवा देवहेळनन्देवासश्चकृमा वयम् । आदित्यास्तस्मान्मा मुञ्चतर्तस्यर्तेन मामित
। देवा जीवनकाम्या यद्वाचाऽनृतमूदिम ।
तस्मान्न इह मुञ्
चत विश्वे देवास्सजोषसः । ऋतेन द्यावापृथिवी ऋतेन त्वꣳ सरस्वति । कृतान्नः पाह्येनसो
यत्किञ्चानृतमूदिम । इन्द्राग्नी
मित्रावरुणौ सोमो धाता बृहस्पतिः । ते नो मुञ्चन्त्वेनसो यदन्यकृतमारिम । सजातशꣳसादुत
जामिशꣳसाज्ज्यायसश्शꣳसादुत वा कनीयसः ।

अना॑धृष्टन्दे॒वकृ॑त॒य्यँदे॒न॒स्तस्मा॒त्त्वम॒स्माञ्जा॑तवेदो मुमुग्धि । यद्वाचा यन्मन॑सा बा॒हुभ्या॑मू॒रुभ्या॑मष्ठीवद्भ्याꣳ
शि॒श्नैर्यदनृ॑तञ्चकृ॒मा व॒यम् । अ॒ग्निर्मा॒
तस्मा॒देन॑सो॒ गार्ह॑पत्यः॒ प्रमु॑ञ्चतु चकृ॒म यानि॑ दुष्कृ॒ता । येन॑ त्रि॒तो अ॑र्ण॒वान्नि॑र्ब॒भूव॒
येन॒ सूर्य॒न्तम॑सो निर्मु॒मोच॑ । येनेन्द्रो॒ विश्वा॒
अज॑हा॒दरा॑ती॒स्तेना॒हञ्ज्योति॑षा॒ ज्योति॑रानशा॒न आ॑क्षि । यत्कुसी॑द॒मप्र॑तीत्त॒ं मये॒ह
येन॑ य॒मस्य॑ नि॒धिना॒ चरा॑मि । ए॒तत्तद॑ग्ने अनृ॒णो भ॑वामि॒ जीव॑न्नेव
प्रति॒ तत्ते॑ दधामि । यन्मयि॑ मा॒ता यदा॑ पि॒पेष॒ यद॒न्तरि॑क्षय्यँद्॒आशसाति॑क्रामामि त्रि॒ते
दे॒वा दि॒वि जा॒ता यदाप॑ इ॒मम्मे॑ वरुण॒ तत्त्वा॑ यामि॒ त्वन्नो॑
अग्ने॒ सत्वन्नो॑ अग्ने॒ त्वम॑ग्ने अ॒यासि॑ ।3।
20300
मु॒मु॒ग्धि॒ स॒प्त च॑ ।3।
20401
यददी॑व्यन्नृ॒णम॒हं ब॒भूवादि॑त्सन्वा सञ्ज॒गर॒ जने॑भ्यः । अ॒ग्निर्मा॒ तस्मा॒दिन्द्र॑श्च संविदा॒नौ
प्रमु॑ञ्चताम् । यद्धस्ता॑भ्याञ्चक॒र
किल्बि॑षाण्य॒क्षाणा॑व्वग्नु॒मु॑प॒जिघ्न॑मानः । उ॒ग्रं॒प॒श्या च॑ राष्ट्र॒भृच्च॒ तान्य॑प्स॒रसा॒वनु॑दत्तामृ॒णानि॑
। उग्रं॑पश्ये॒ राष्ट्र॑भृ॒त्किल्बि॑षाणि॒ यद॒क्षवृ॑त्त॒मनु॑दत्तमे॒तत् ।
नेन्न॑ ऋ॒णानृ॑णव॒ इथ्स॑मानो य॒मस्य॑ लो॒के अधि॑रज्जु॒राय॑। अव॑ ते॒ हेळ॒ उदु॑त्त॒ममि॒मं
मे॑ वरुण॒ तत्त्वा॑ यामि॒ त्वन्नो॑ अग्ने॒ सत्वन्नो॑ अग्ने । सङ्कु॑सुकु॒ो
विकु॑सुको निर्ऋ॒थो यश्च॑ निस्व॒नः । ते॑ऽस्मद्यक्ष्म॒मना॑गसो दू॒राद्दू॒रम॑चीचतम् । निर्य॑क्ष्ममचीचते
कृ॒त्यान्निर्ऋ॑तिञ्च । तेन॒ यो॑ऽस्मथ्सम॑र्च्छातै॒
तम॑स्मै॒ प्रसु॑वामसि । दु॒श्श॒ꣳसा॒नु॒श॒ꣳसाभ्या॑ङ्घ॒णेना॑नुघ॒णेन॑ च । तेना॒न्यो॑ऽस्मथ्सम॑र्च्छातै॒
तम॑स्मै॒ प्रसु॑वामसि । सँव्वर्च॑सा॒ पय॑सा॒ सन्त॒नूभि॒
रग॑न्महि॒ मन॑सा॒ सꣳ शि॒वेन॑ । त्वष्टा॑ नो॒ अत्र॒ विद॑धातु॒ रा॒योऽनु॑मार्ष्टु त॒न्वो॑ यद्विलि॑ष्टम् ।4।
20400
कृ॒त्यान्निर्ऋ॑तिञ्च॒ पञ्च॑ च ।4।
20501
आयु॑ष्टे वि॒श्वतो॑ दधद॒यम॒ग्निर्वरे॑ण्यः । पुन॑स्ते प्रा॒ण आया॑ति॒ परा॒यक्ष्मꣳ सुवामि ते
। आ॒यु॒र्दा अ॑ग्ने ह॒विषो॑ जुषा॒णो घृ॒तप्र॑तीको
घृ॒तयो॑निरेधि । घृ॒तं पी॒त्वा मधु॒ चारु॒ गव्य॑म्पि॒तेव॑ पु॒त्रम॒भिर॑क्षतादि॒मम् । इ॒मम॑ग्न॒
आयु॑षे॒ वर्च॑से कृधि ति॒ग्ममोजो॑ वरुण॒ सꣳशि॑शाधि ।
मा॒तेवा॑स्मा अदिते॒ शर्म॑ यच्छ॒ विश्वे॑देवा॒ जर॑दष्टि॒र्यथाऽस॑त् । अग्न॒ आयूꣳ॑षि पवस॒

आसुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् । अग्ने पवस्व
स्वपा अस्मे वर्चस्सुवीर्यम् । दधद्रयिं मयि पोषम् ।5।
20502
अग्निर् ऋषिः पवमानः पाञ्चजन्यः पुरोहितः । तमीमहे महागयम् । अग्ने जातान्प्रणुदा
नस्सपत्नान्प्रत्यजाताञ्जातवेदो नुदस्व ।
अस्मे दीदिहि सुमना अहेळञ्छर्मन्ते स्याम त्रिवरूथ उद्भौ । सहसा जातान्प्रणुदा
नस्सपत्नान्प्रत्यजाताञ्जातवेदो नुदस्व । अधि नो ब्रूहि
सुमनस्यमानो वय स्याम प्रणुदा नस्सपत्नान् । अग्ने यो नोऽभितो जनो वृको वारो
जिघाꣳसति । ताꣳस्त्वव्वृँत्रहञ्जहि वस्वस्मभ्यमाभर ।
अग्ने यो नोऽभिदासति समानो यश्च निष्ट्यः । तव्वँयꣳ समिधङ्कृत्वा तुभ्यमग्नेऽपि दध्मसि ।6।
20503
यो नश्शपादशपतो यश्च नश्शपतश्शपात् । उषाश्च तस्मै निम्रुक्च सर्वं पापꣳ
समूहताम् । यो नस्सपत्नो यो रणो मर्तोऽभिदासति देवाः ।
इध्मस्येव प्रक्षायतो मा तस्योच्छेषि किञ्चन । यो मान्द्वेष्टि जातवेदो यञ्चाहन्द्वेष्मि
यश्च माम् । सर्वाꣳस्तानग्ने सन्दह याꣳश्चाहन्द्वेष्मि ये च माम् ।
यो अस्मभ्यमरातीयाद्यश्च नो द्वेषते जनः । निन्दाद्यो अस्मान्दिफ्साच्च सर्वाꣳस्तान्मष्मषा
कुरु । सꣳशितं मे ब्रह्म सꣳशितव्वीर्या १ म् बलम् ।
सꣳशितङ्क्षत्रं मे जिष्णु यस्याहमस्मि पुरोहितः । उदेषां बाहू अतिरमुद्वर्चो
अथो बलम् । क्षिणोमि ब्रह्मणाऽमित्रानुन्नयामि स्वा १ म् अहम् ।
पुनर्मनः पुनरायुर्म आगात्पुनश्चक्षुः पुनःश्रोत्रम्म आगात्पुनः प्राणः पुनराधीतं
म आगात् । वैश्वानरो मेऽदब्धस्तनूपा अवबाधतान्दुरितानि विश्वा ।7।
20500
पोषन्दध्मसि पुरोहितश्चत्वारि च ।5।
20601
वैश्वानराय प्रतिवेदयामो यदीनृणꣳ सङ्गरो देवतासु । स एतान्पाशान् प्रमुचन्
प्रवेद स नो मुञ्चातु दुरितादवद्यात् ।
वैश्वानरः पवयान्नः पवित्रैर्यथ्सङ्गरमभिधावाम्याशाम् । अनाजानन्मनसा याचमानो
यदत्रैनो अव तथ्सुवामि । अमी ये सुभगे दिवि विचृतौ
नाम तारके । प्रेहामृतस्य यच्छतामेतद्बद्धकमोचनम् । विजिहीर्ष्व लोकान्कृधि बन्धान्मुञ्चासि
बद्धकम् । योनेरिव प्रच्युतो गर्भस्सर्वान्पथो
अनुष्व । स प्रजानन्प्रतिगृभ्णीत विद्वान्प्रजापतिः प्रथमजा ऋतस्य । अस्माभिर्दत्तञ्जरसः

प॒रस्ता॒दच्छि॑न्नं॒ तन्तु॒मनु॒ सञ्च॑रेम ।8।
20602
त॒तन्तन्तु॒मन्वेके॒ अनु॒ सञ्च॑रन्ति॒ येषा॒न्दत्तं॒ पित्र्य॒माय॑नवत् । अ॒ब॒न्ध्वेके॒ दद॑तः
प्र॒यच्छा॒द्दातु॒ञ्चेच्छ॒क्नवा॑ंसस्स्व॒र्ग एषाम् ।
आर॑भेथा॒मनु॒ सꣳर॑भेथाꣳ सम॒नं पन्था॑मवथो॒ घृतेन॑ । यद्वां॑ पू॒र्तं परि॑विष्ट॒य्यँद॒ग्नौ
तस्मै॒ गोत्रा॑येह जाया॑पती॒ सꣳर॑भेथाम् । यद॒न्तरि॑क्षं पृथि॒वीमु॒त
द्याय्यँन्मा॒तर॑ं पि॒तर॑व्वाँ जिहिꣳसि॒म । अ॒ग्निर्मा॒ तस्मा॒देन॑सो॒ गार्ह॑पत्य॒ उन्नो॑
नेषद्दु॒रि॒ता यानि॑ चकृ॒म । भूमि॑र्मा॒ताऽदि॑तिर्नो ज॒नित्रं॒ भ्रा॒ता॒न्तरि॑क्ष
म॒भिश॑स्त एनः । द्यौर्नः॑ पि॒ता पि॑तृ॒याच्छं॒ भ॑वासि जा॒मि मि॒त्वा मा वि॑विथ्सि लो॒कात् । यत्र॑
सु॒हार्द॑स्सुकृ॒तो॒ मद॑न्ते वि॒हाय॒ रोग॑न्त॒न्वा १॒ ꣳ॒
स्वाया॑म् । अ॒श्लो॒णाङ्गै॒रह्रु॑तास्स्व॒र्गे तत्र॑ पश्येम पि॒तर॑ञ्च पु॒त्रम् । यदन्न॒मद्म्य॑नृ॑तेन
देवा दा॒स्यन्नदा॑स्यन्नु॒त वा॑ करि॒ष्यन् । यद्दे॒वाना॒ञ्चक्षु॒ष्यागो॒
अस्ति॒ यद॒व किञ्च॑ प्रतिजग्र्॒राहम॒ग्निर्मा॒ तस्मा॑दनृ॒णङ्कृ॑णोतु । यदन्न॒मद्मि॑ बहु॒धा विरू॑प॒व्वाँ॑सो
हिर॑ण्यमु॒त गाम॒जामवि॑म् । यद्दे॒वाना॒ञ्चक्षु॒ष्यागो॒
अस्ति॒ यद॒व किञ्च॑ प्रतिजग्र्॒राहम॒ग्निर्मा॒ तस्मा॑दनृ॒णङ्कृ॑णोतु । यन्मे॒ मन॑सा वा॒चा॒ कृ॒तमेन॑ः
कदा॒चन । सर्व॑स्मा॒न्मेळि॑तो मोग्धि॒ त्वꣳ हि वेत्थ॑
यथात॒थम् ।9।
20600
च॒रे॒म॒ पु॒त्रꣳ षट्च॑ ।6।
20701
वात॑रशना ह॒ वा ऋष॑यश्श्रम॒णा ऊ॒र्ध्वम॑न्थि॒नो ब॑भूवु॒स्तानृष॑यो॒ऽर्थमा॑य॒स्ते नि॒लाय॑मचर॒न्तेऽनु॑प्रविशुः
कूश्म॒ाण्डानि॒
ताꣳस्तेष्वन्व॑विन्दञ्छ्र॒द्धया॑ च॒ तप॑सा च॒ तानृष॑योऽब्रुवन्क॒था नि॒लाय॑ञ्चर॒थेति॒ त ऋषी॑नब्रुव॒न्नमो॑
वोऽस्तु भगवन्तो॒ऽस्मिन्धा॑म्नि॒ केन॑ वस्सपर्या॒मेति॒
तानृष॑योऽब्रुवन्प॒वित्र॑न्नो ब्रूत॒ येना॑रे॒पस॑स्स्या॒मेति॒ त ए॒तानि॑ सू॒क्तान्य॑पश्य॒न्
यद्दे॑वा देव॒हेळ॑न॒य्यँददी॑व्यन्नृ॒णम॒हं ब॒भूवायु॑ष्टे वि॒श्वतो॑
दध॒दित्ये॒तैराज्य॑ञ्जुहुत वैश्वान॒राय॒ प्रति॑वेदयाम॒ इत्युप॑तिष्ठत॒ यद॑र्वा॒चीन॒मेनो॑ भ्रूणह॒त्याया॒स्तस्मा॑न्मोक्ष्यध्व॒
इति॒ त ए॒तैर॑जुहवु॒स्तेऽरे॒पसो॑ऽभवन्
कर्मा॒दिष्वे॒तैर्जु॑हुयात्पू॒तो दे॑वलो॒कान्थ्सम॑श्नुते ।10। ।7।
20801
कू॒श्मा॒ण्डैर्जु॑हुया॒द्योऽपूत इव॒ मन्ये॑त॒ यथा॑ स्ते॒नो यथा॑ भ्रूण॒हैवमे॒ष भ॑वति॒ योऽयोनौ॒

रेत॑स्सि॒ञ्चति॒ यद॑र्वा॒चीन॒मेनो᳚
भ्रूणह॒त्याया॒स्तस्मा᳚न्मुच्यते॒ याव॒देनो॑ दी॒क्षामु॑पै॑ति दीक्षि॒त ए॒तैस्स॑त॒ति जु॑होति
सव्वँ॑थ्स॒रन्दी᳚क्षि॒तो भ॑वति सव्वँ॑थ्स॒रादे॒वात्मान॑ं पुनीते॒ मास॑न्दीक्षि॒तो
भ॑वति॒ यो मास॒स्स स॑व्वँ॑थ्स॒रस्स॑व्वँ॑थ्स॒रादे॒वात्मान॑ं पुनीते॒ चत॒र्वि॑ꣳशति॒ꣳ॒ रात्री᳚र्दीक्षि॒तो
भ॑वति॒ चत॒र्वि॑ꣳशतिरर्धमा॒सास्स॑व्वँ॑थ्स॒रस्स॑व्वँ॑थ्स॒रादे॒वात्मान॑ं
पुनीते॒ द्वाद॑श॒ रात्री᳚र्दीक्षि॒तो भ॑वति॒ द्वाद॑श॒ मासा᳚स्सव्वँ॑थ्स॒रस्स॑व्वँ॑थ्स॒रादे॒वात्मान॑ं
पुनीते॒ षड्रात्री᳚र्दीक्षि॒तो भ॑वति॒ षड्वा ऋ॒तव॑स्सव्वँ॑थ्स॒रस्स॑व्वँ॑थ्स॒रा
दे॒वात्मान॑ं पुनीते ति॒स्रो रात्री᳚र्दीक्षि॒तो भ॑वति त्रि॒पदा॑ गाय॒त्री गा॑यत्रि॒या ए॒वात्मान॑ं
पुनीते॒ न मा॒ꣳ॒सम॑श्नीया॒न्न स्त्रिय॒मुपे॑या॒न्नोपर्या॑सीत॒ जुगु॑प्से॒तानृ॑ता
त्पयो᳚ ब्राह्म॒णस्य॑ व्र॒तय्यँ॑वा॒गू रा॑ज॒न्यस्या॒मिक्षा॒ वैश्य॒स्याथो॑ सौ॒म्येप्य॑ध्व॒र
ए॒तद्व्रतं ब्रू॑या॒द्यदि॒ मन्ये॑तोप॒दस्या॒मीत्यो॑द॒नन्धा॒नास्सक्तू॑न्घृ॒तमित्यनु॑व्रतये
दा॒त्मनोऽनु॑पदासाय ।11।।8।
20901
अ॒जान्॒ ह॒ वै पृश्नी॑ꣳस्तप॒स्यमा॑ना॒न्॒ ब्रह्म॑ स्वय॒म्भ्व॑भ्यान॑र्ष॒त्त
ऋष॑योऽभव॒न्तदृषी॑णामृषि॒त्वन्तान्दे॒वता॒मुपा॑तिष्ठन्त य॒ज्ञका॑मा॒स्त
ए॒तं ब्र॑ह्मय॒ज्ञम॑पश्य॒न्तमाह॑र॒न्तेना॑यजन्त॒ यदृ॒चोऽध्यगी॑षत॒ ताः पय॑आहुतयो दे॒वाना॑मभव॒न्
यद्यजू॑ꣳषि घृ॒ताहु॑तय॒ो यथ्सामा॑नि॒ सोमा॑हुतय॒ो
यदथ॑र्वाङ्गि॒रस॒ो मध्वा॑हुतय॒ो यद्ब्रा᳚ह्म॒णानी॑तिह॒ासान्पु॑रा॒णानि॒ कल्पा॒न्गाथा॑ नाराश॒ꣳ॒सीर्मे॑दाहु॒तयो॑
दे॒वाना॑मभव॒न्ताभि॒ः
क्षुध॑ं पा॒प्मान॒मपा᳚घ्नन्नप॑हतपाप्मानो दे॒वास्स्व॒र्गल्लो॒कमा॑य॒न् ब्रह्म॑ण॒स्सायु॑ज्य॒मृष॑योऽगच्छन्॒ ।12।।9।
21001
पञ्च॒ वा ए॒ते म॑हाय॒ज्ञास्स॑त॒ति प्रता॑यन्ते सत॒ति सन्ति॑ष्ठन्ते देवय॒ज्ञः पि॑तृय॒ज्ञो भू॑तय॒ज्ञो
म॑नुष्यय॒ज्ञो ब्र॑ह्मय॒ज्ञ इति॒ यद॒ग्नौ
जु॒होत्य॒पि स॒मिध॒न्तद्दे॑वय॒ज्ञस्सन्ति॑ष्ठते॒ यत्पि॒तृभ्य॑स्स्व॒धा क॒रोत्य॒प्य॒पस्तत्पि॑तृय॒ज्ञस्सन्ति॑ष्ठते॒
यद्भू॒तेभ्यो॑ ब॒लिꣳ हर॑ति॒ तद्भू॒तय॒ज्ञस्सन्ति॑ष्ठते॒
यद्ब्रा᳚ह्म॒णेभ्योऽन्न॒न्ददा॑ति॒ तन्म॑नुष्यय॒ज्ञस्सन्ति॑ष्ठते॒ यथ्स्वा᳚ध्या॒यमधी॑यी॒तैका॑मप्यृ॒चय्यँ॑जु॒स्साम॑
वा॒ तद्ब्र॑ह्मय॒ज्ञस्सन्ति॑ष्ठते यदृ॒चोऽधी॑ते॒ पय॑स॒ः कूल्या॑ अस्य
पि॒तॄन्थ्स्व॒धा अ॒भिव॑हन्ति॒ यद्यजू॑ꣳषि घृ॒तस्य॑ कूल्या॒ यथ्सामा॑नि॒ सोम॑ एभ्यः पवते॒
यदथ॑र्वाङ्गि॒रस॒ो मधो॒ः कूल्या॒ यद्ब्रा᳚ह्म॒णानी॑तिह॒ासान्पु॑रा॒णानि॒
कल्पा॒न्गाथा॑ नाराश॒ꣳ॒सीर्मे॑दस॒ः कूल्या॑ अस्य पि॒तॄन्थ्स्व॒धा अ॒भिव॑हन्ति॒ यदृ॒चोऽधी॑ते॒

पर्यआहुतिभिरेव तद्देवाꣳस्तर्पयति यद्यजूꣳषि घृताहुतिभि
र्यथ्सामानि सोमाहुतिभिर्यदथर्वाङ्गिरसो मध्वाहुतिभिर्यद्ब्राह्मणानीतिहासान्पुराणानि
कल्पान्गाथा नाराशꣳसीर्मेदाहुतिभिरेव तद्देवाꣳस्तर्पयति त
एनन्तृप्ता आयुषा तेजसा वर्चसा श्रिया यशसा ब्रह्मवर्चसेनान्नाद्येन च तर्पयन्ति ।।13।।।10।।
21101
ब्रह्मयज्ञेन यक्ष्यमाणः प्राच्यान्दिशि ग्रामादच्छदिर्दर्श उदीच्यां प्रागुदीच्याव्वोदित
आदित्ये दक्षिणत उपवीयोपविश्य
हस्तावविनिज्य त्रिराचामेद्द्विः परिमृज्य सकृदुपस्पृश्य शिरश्चक्षुषी नासिके
श्रोत्रे हृदयमालभ्य यत्त्रिराचामति तेन ऋचः प्रीणाति यद्द्विः परिमृजति
तेन यजूꣳषि यथ्सकृदुपस्पृशति तेन सामानि यच्छिरश्चक्षुषी नासिके श्रोत्रे
हृदयमालभते तेनाथर्वाङ्गिरसो ब्राह्मणानीतिहासान्पुराणानि कल्पान्गाथा
नाराशꣳसीः प्रीणाति दर्भाणां महदुपस्तीर्योपस्थङ्कृत्वा प्राङासीनस्स्वाध्यायमधीयीतापाव्वाँ
एष ओषधीनाꣳ रसो यद्दर्भास्सरसमेव ब्रह्म कुरुते
दक्षिणोत्तरौ पाणी कृत्वा सपवित्रावोमिति प्रतिपद्यत एतद्वै यजुस्त्रयीव्विद्यां प्रत्येषा
वागेतत्परममक्षरन्तदेतदृचाऽभ्युक्तमृचो अक्षरे परमे व्योमन्
यस्मिन्देवा अधि विश्वे निषेदुर्यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे
समासत इति त्रीनेव प्रायुङ्क्त भूर्भुवस्स्वरित्याहैतद्वै वाचस्सत्यय्यँदेव
वाचस्सत्यन्तत्प्रायुङ्क्ताथ सावित्रीङ्गायत्रीन्त्रिरन्वाह पच्छोऽर्धर्चशोऽनवानꣳ
सविता श्रियः प्रसविता श्रियमेवाप्नोत्यथो प्रज्ञातयैव प्रतिपदा छन्दाꣳसि
प्रतिपद्यते ।14।11।
21201
ग्रामे मनसा स्वाध्यायमधीयीत दिवानक्तंव्वेति हस्माह शौच आह्नेय उतारण्येबल
उत वाचोत तिष्ठन्नुत व्रजन्नुतासीन उत
शयानोऽधीयीतैव स्वाध्यायन्तपस्वी पुण्यो भवति य एवव्विंद्वान्थ्स्वाध्यायमधीते
नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः ।
नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि ।(15)।12।
21301
मध्यन्दिने प्रबलमधीयीतासौ खलु वावैष आदित्यो यद्ब्राह्मणस्तस्मात्तर्हि तेऽक्ष्णिष्ठन्तपति
तदेषाऽभ्युक्ता । चित्रन्देवाना
मुदगादनीकञ्चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षꣳ

सूर्य॑ आ॒त्मा जग॑तस्त॒स्थुष॒श्चेति॒ स वा ए॒ष य॒ज्ञस्स॒द्यः प्रता॑यते
स॒द्यस्सन्ति॑ष्ठते॒ तस्य॒ प्राख्सा॒यम॑वभृ॒थो नम॒ो ब्रह्म॑ण॒ इति॑ परि॒धानीया॒न्त्रिरन्वा॑हा॒प
उ॑प॒स्पृश्य॑ गृ॒हानै॑ति॒ तत॒ो यत्किञ्च॒ ददा॑ति॒ सा दक्षि॑णा ।(16)।।13।
21401
तस्य॒ वा ए॒तस्य॑ य॒ज्ञस्य॒ मेघो॑ हवि॒र्धान॑ँव्वि॒द्युद॒ग्निर्॒व॒र्॒षꣳ ह॒विस्स्त॑नयि॒त्नुर्व॑षट्का॒रो
यद॑व॒स्फूर्जै॑ति॒ सोऽनु॑वषट्का॒रो वा॒यु॒रा॒त्माऽ
मा॑वा॒स्या᳚ स्विष्ट॒कृद्य ए॒वँव्वि॒द्वान्मे॒घे व॒र्॒षति॑ वि॒द्योत॑माने स्त॒नय॑त्यव॒स्फूर्जै॑ति॒
पव॑माने वा॒याव॑मावा॒स्या॑याꣳ स्वाध्या॒यमधी॑ते॒ तप॑ ए॒व तत्त॑प्यते॒
तपो॑ हि स्वाध्या॒य इत्यु॑त्त॒मन्नाकꣳ॑ रोहत्यु॒त्तमस्स॑मा॒नाना᳚ं भवति॒ याव॑न्तꣳ ह॒ वा इ॒मा॑ँव्वि॒त्तस्य॑
पू॒र्णान्दद॑त्स्व॒र्गल्लो॒कञ्ज॑यति॒ ताव॑न्तल्लो॒ँकञ्ज॑यति॒
भूयाꣳ॑सञ्चा॒क्ष॒य्यञ्चाप॑पुनर्मृ॒त्युञ्ज॑यति॒ ब्रह्म॑ण॒स्सायु॑ज्यङ्गच्छति ।।17। ।14।
21501
तस्य॒ वा ए॒तस्य॑ य॒ज्ञस्य॒ द्वाव॑नध्या॒यौ यदा॒त्माऽशुचि॒र्यद्दे॒शस्सम॑ृद्धिर्दै॑व॒तानि॒
य ए॒वव्वि॒द्वान्म॑हारा॒त्र उ॒षस्युदि॑ते॒ व्रज॒स्तिष्ठ॒न्नासी॑न॒
श्शया॑नोऽरण्ये᳚ ग्रामे॒ वा याव॑त्त॒रस॑ स्वाध्या॒यमधी॑ते॒ सर्वा᳚ल्लो॒ँकाञ्ज॑यति॒ सर्वा᳚ल्लो॒ँकान॑नृ॒णोऽनु॒
सञ्च॑रति॒ तदे॒षाभ्यु॑क्ता । अ॒नृ॒णा अ॒स्मिन्न॑नृ॒णाः
पर॑स्मिस्तृ॒तीये॑ लो॒के अ॑नृ॒णास्स्या॑म । ये दे॑व॒याना॑ उ॒त पि॑तृ॒याणा॒स्सर्वा᳚न्प॒थो
अ॑नृ॒णा आक्षी॑ये॒मेत्य॒ग्निँ वै जा॒तं पा॒प्मा ज॑ग्रा॒ह तन्दे॒वा आहु॑तीभिः
पा॒प्मान॒मपा᳚घ्न॒न्नाहु॑तीनाय्यँ॒ज्ञेन॑ य॒ज्ञस्य॒ दक्षि॑णाभि॒र्दक्षि॑णानां ब्राह्म॒णेन॑
ब्राह्म॒णस्य॒ छन्दो॑भि॒श्छन्द॑साꣳ स्वाध्या॒येनाप॑हतपाप्मा स्वाध्या॒यो॑
दे॒वप॑वित्र॒ँव्वा ए॒तत्तय्यो॑ऽनू᳚थ्सृ॒जत्यभा॑गो वा॒चि भ॑व॒त्यभा॑गो ना॒के तदे॒षाऽभ्यु॑क्ता
। यस्ति॒त्याज॑ सखि॒विद॒ꣳ॒ सखा॑य॒न्न तस्य॑ वा॒च्यपि॑ भा॒गो अ॑स्ति ।
यदीꣳ॑ शृ॒णोत्य॒लकꣳ॑ शृणोति॒ न हि प्र॒वेद॑ सुकृ॒तस्य॒ पन्था॒मिति॒ तस्मा᳚थ्स्वाध्या॒योऽध्ये॑त॒व्यो॑
यय्यँ॒ङ्क्र॒तुमधी॑ते॒ तेन॑ तेनास्ये॒ष्टं भ॑वत्य॒ग्नेर्वा॒योरा॑दि॒त्यस्य॒
सायु॑ज्यङ्गच्छति॒ तदे॒षाऽभ्यु॑क्ता । ये अ॒र्वाङु॒त वा॑ पु॒रा॒णे वे॒दंव्वि॒द्वाꣳस॑म॒भितो॑
वदन्त्यादि॒त्यमे॒व ते परि॑वदन्ति॒ सर्वे॑ अ॒ग्निन्द्वि॒तीय॑न्तृ॒तीय॑ञ्च
ह॒ꣳ॒समिति॒ याव॑ती॒र्वै दे॒वता॒स्तास्सर्वा॑ वेद॒विदि॑ ब्राह्म॒णे व॑सन्ति॒ तस्मा᳚ब्ब्राह्म॒णेभ्यो॑
वेद॒विद्भ्यो॑ दि॒वेदि॑वे॒ नम॑स्कु॒र्या॒न्नाश्ली॒लङ्की᳚र्तयेदे॒ता
ए॒व दे॒वता᳚ः प्रीणाति ।(18)।।15।
21601

रिच्य॑त इ॒व वा ए॒ष प्रेव रि॑च्यते॒ यो या॒जय॑ति॒ प्रति॑ वा गृ॒ह्णाति॑ या॒जयि॑त्वा प्रतिगृ॒ह्य
वाऽन॑श्न॒न्त्रिः स्वा॑ध्या॒यँव्वे॒दमधी॑यीत
त्रि॒रा॒त्रव्वा॑ सावि॒त्रीङ्गा॑य॒त्रीम॒न्वाति॑रेचयति॒ व॒रो दक्षि॑णा॒ वरे॑णै॒व वर॑स्पृणोत्या॒त्मा हि वरः॑ ।(19)।
।16।
21701
दु॒हे ह॒ वा ए॒ष छन्दा॒ꣳसि॒ यो या॒जय॑ति॒ स येन॑ य॒ज्ञक्र॒तुना॑ या॒जये॒त्सोऽर॑ण्यं प॒रेत्य॑
शुचौ दे॒शे स्वा॑ध्या॒यमे॒वैन॒मधी॑यन्नासी॒त
तस्या॒नश॑नन्दी॒क्षा स्था॒नमु॑प॒सद॒ आस॑नꣳ सु॒त्या वाग्जु॒हूर्मन॑ उप॒भृद्धृ॒तिर्ध्रु॒वा
प्रा॒णो ह॒विस्सामा॑ध्व॒र्युस्स वा ए॒ष य॒ज्ञः प्रा॒णद॑क्षि॒णोऽन॑न्तदक्षिण॒
स्सम॑ृद्धतरः । (20)।।17।
21801
कु॒ति॒धाव॑कीर्णी प्रवि॒शति॑ चतु॒र्धेत्या॑हुर्ब्रह्मवा॒दिनो॑ म॒रुतः॑ प्रा॒णैरिन्द्रं॑ बले॑न॒
बृह॒स्पति॑ं ब्रह्मवर्च॒सेना॒ग्निमे॒वेत॑रेण॒ सर्वे॑ण॒ तस्यै॒तां
प्राय॑श्चित्तिं वि॒दाञ्च॑कार सु॒दे॒वः का॑श्य॒पो यो ब्र॑ह्मचा॒र्य॑वकिरे॑दमावा॒स्या॑या॒ꣳ
रात्र्या॑म॒ग्निं प्र॒णीयो॑पसमा॒धाय॒ द्विरा॒ज्य॑स्योप॒घात॑ञ्जुहोति॒ कामाव॑कीर्णो॒ऽ
स्म्यव॑कीर्णोऽस्मि॒ काम॒ कामा॑य॒ स्वाहा॒ कामाभि॑द्रुग्धो॒ऽस्म्यभि॑द्रुग्धोऽस्मि॒ काम॒ कामा॑य॒
स्वाहेत्य॒मृतँ॒व्वा आज्य॑म॒मृत॑मे॒वात्मन्ध॑त्ते हु॒त्वा प्र॒यता॑ञ्जलिः
कवा॑तिर्यङ्ङ॒ग्निम॒भिम॑न्त्रयेत॒ सम्मा॑ऽऽसिञ्चन्तु म॒रुत॒स्समिन्द्र॒स्सं बृह॒स्पतिः॑ । सम्मा॒यम॒ग्निस्सि॑ञ्च॒त्वायु॑षा
च॒ बले॑न॒ चायु॑ष्मन्तङ्करोत॒मेति॒ प्रति॑ हास्मै
म॒रुतः॑ प्रा॒णान्द॑धति॒ प्रतीन्द्रो॑ बल॒ं प्रति॒ बृह॒स्पति॑र्ब्रह्मवर्च॒सं प्रत्य॒ग्निरि॒तर॒थ्सर्व॒ꣳ
सर्व॑तनु॒र्भू॒त्वा सर्व॒मायु॑रेति॒ त्रिर॒भिम॑न्त्रयेत॒ त्रि॒ष॑त्या॒ हि दे॒वा योऽपू॑त
इव॒ मन्ये॑त॒ स इ॒त्थञ्जु॑हुयादि॒त्थम॒भिम॑न्त्रयेत॒ पुनी॑त ए॒वात्मान॒मायु॑रे॒वात्मन्ध॑त्ते
व॒रो दक्षि॑णा॒ वरे॑णै॒व वर॑स्पृणोत्या॒त्मा हि वरः॑ ।(21)।।18।
21901
भूः प्रप॑द्ये॒ भुव॒ः प्रप॑द्ये॒ स्वः॑ प्रप॑द्ये॒ भूर्भुव॒स्स्वः॑ प्रप॑द्ये॒ ब्रह्म॒ प्रप॑द्ये
ब्रह्मको॒शं प्रप॑द्ये॒ऽमृत॒ं प्रप॑द्येऽमृतको॒शं प्रप॑द्ये चतु॒र्जा॒लं
ब्रह्मको॒शय्यँम्मृत्यु॒र्नाव॒पश्य॑ति॒ तं प्रप॑द्ये दे॒वान् प्रप॑द्ये देवपु॒रं प्रप॑द्ये॒
परी॑वृतो॒ वरी॑वृतो॒ ब्रह्म॑णा॒ वर्म॑णा॒ऽहन्तेज॑सा॒ कश्य॑पस्य॒ यस्मै॒ नम॒स्तच्छिरो॒
धर्मो॑ मू॒र्धानं॑ ब्र॒ह्मोत्त॑रा॒ हनु॒र्य॒ज्ञोऽध॑रा॒ विष्णु॒र् हृदय॒ꣳ सव्वँ॒थ्स॒रः प्र॒जन॑नम॒श्विनौ॑
पूर्व॒पादा॑व॒त्रिर्मध्य॑ं मि॒त्रावरु॑णावप॒रपादा॑व॒ग्निः पुच्छ॑स्य

प्र॒थ॒मङ्काण्ड॒न्तत॒ इन्द्रस्तत॑ः प्र॒जाप॑ति॒रभ॑यञ्चतु॒र्थꣳ स वा ए॒ष दि॒व्यश्शाँ॑क्व॒रश्शिशु॒॑मा॒र॒स्तꣳ
ह॒ य ए॒वव्वेदाप॑ पुनर्मृ॒त्युञ्ज॑यति॒ जय॑ति स्व॒र्गल्लो॒क
न्नाध्व॑नि॒ प्रमी॑यत॒े नाफ्सु प्रमी॑यत॒े नाग्नौ प्रमी॑यत॒े नान॒पत्य॑ः प्रम॒ीयत॑े ल॒घ्वान्नो॑
भवति ध्रु॒वस्त्वम॑सि ध्रु॒वस्यक्षि॑तमसि॒ त्वं भू॒ताना॒मधि॑पतिरसि॒
त्वं भू॒ताना॒ꣳ श्रेष्ठो॑ऽसि॒ त्वां भू॒तान्युप॑ प॒र्याव॑र्तन्त॒े नम॑स्त॒े नम॒स्सर्व॑न्त॒े नम॑ः । (22)।
।19।
21900
सह॒ रक्षा॑ꣳसि॒ यद्दे॑वास्स॒प्तद॑श॒ यददी॒॑व्यं॒ पञ्च॑द॒शायु॑ष्टे चतु॑स्त्रिꣳशद्वैश्वान॒राय॒
षड्विꣳ॑शति॒र्वात॑रशना ह कूश्म॒ाण्डैर॒जान् ह॒ पञ्च॑ ब्रह्मय॒ज्ञेन॒ ग्रामे॑ म॒ध्यन्दि॑ने॒
तस्य॒ वै मेघ॒स्तस्य॒ वै द्वौ रिच्य॑ते दु॒हे ह॑ कति॒धाव॑कीर्णो॒ भूरेक॒ान्नविꣳ॑शतिः ।19।
20000
सह॒ वै कूँ॑श्म॒ाण्डैः क॑ति॒धाव॑कीर्णो॒ द्वाविꣳ॑शतिः ।।22।। सह॒ वै सर्व॑न्त॒े नम॑ः ।।
द्वितीयः प्रश्नः समाप्तः ।।

30000
।। तैत्तिरीयारण्यके तृतीयप्रश्न-प्रारंभः ।।
30101
चित्तिस्स्रुक् । चित्तमाज्यम् । वाग्वेदिः । आधीतं बर्हिः । केतो अग्निः । विज्ञातमग्निः । वाक्पतिर्होता । मन उपवक्ता ।
प्राणो हविः । सामाध्वर्युः । वाचस्पते विधेनामन्न् । विधेम ते नाम । विधेस्त्वमस्माकन्नाम । वाचस्पतिस्सोमं पिबतु । आऽस्मासु नृम्णन्धात्स्वाहा ।।(1)
30100
अध्वर्युः पञ्च च ।।1।।
30201
पृथिवी होता । द्यौरध्वर्युः । रुद्रोऽग्नीत् । बृहस्पतिरुपवक्ता । वाचस्पते वाचो वीर्येण । संभृततमेनायक्ष्यसे । यजमानाय
वार्यम् । आसुवस्करस्मै । वाचस्पतिस्सोमं पिबतु । जजनदिन्द्रमिन्द्रियाय स्वाहा ।।(2)।
30200
पृथिवी होता दश ।2।
30301
अग्निर् होता । अश्विनाऽध्वर्यू । त्वष्टाग्नीत् । मित्र उपवक्ता । सोमस्सोमस्य पुरोगाः । शुक्रश्शुक्रस्य पुरोगाः । श्रातास्त
इन्द्र सोमाः । वातापेर् हवनश्रुतस्स्वाहा ।(3)।
30300
अग्निर्होताऽष्टौ ।3।
30401
सूर्यन्ते चक्षुः । वातं प्राणः । द्यां पृष्ठम् । अन्तरिक्षमात्मा । अङ्गैर्यज्ञम् । पृथिवीꣳ शरीरैः । वाचस्पतेऽच्छिद्रया वाचा ।
अच्छिद्रया जुह्वा । दिवि देवावृधꣳ होत्रा मेरयस्व स्वाहा ।(4)
30400
सूर्यन्ते नव ।4।
30501
महाहविर् होता । सत्यहविरध्वर्युः । अच्युतपाजा अग्नीत् । अच्युतमना उपवक्ता । अनाधृष्यश्चाप्रतिधृष्यश्च
यज्ञस्याभिगरौ ।
अयास्य उद्गाता । वाचस्पते हृद्विधे नामन्न् । विधेम ते नाम । विधेस्त्वमस्माकन्नाम । वाचस्पतिस्सोममपात् । मा दैव्यस्तन्तुश्छेदि मा मनुष्यः ।

नमो॑ दि॒वे । नम॑ः पृथि॒व्यै स्वाहा॓ ।(5)।
30500
अ॒पा॒त्रीणि॑ च ।(5)।
30601
वाग्घोता॓ । दी॒क्षा पत्नी॓ । वातो॓ऽध्व॒र्युः । आपो॑ऽभिग॒रः । मनो॑ ह॒विः । तप॑सि जुहोमि ।
भूर्भुव॒स्सुव॑ः । ब्रह्म॑ स्वय॒ंभु ।
ब्रह्म॑णे स्वय॒ंभुवे॒ स्वाहा॓ ।(6)
30600
वाग्घोता॒ नव॑ ।6।
30701
ब्रा॒ह्म॒ण एक॑होता । स य॒ज्ञः । स मे॑ ददातु प्र॒जां प॒शूनपुष्टि॒य्यँश॑ः । य॒ज्ञश्च॑ मे भूयात् । अ॒ग्निर्द्विहो॑ता ।
स भ॒र्ता । स मे॑
ददातु प्र॒जां प॒शूनपुष्टि॒य्यँश॑ः । भ॒र्ता च॑ मे भूयात् । पृ॒थि॒वी त्रिहो॑ता । स प्र॑ति॒ष्ठा ।(7)।
30702
स मे॑ ददातु प्र॒जां प॒शूनपुष्टि॒य्यँश॑ः । प्र॒ति॒ष्ठा च॑ मे भूयात् । अ॒न्तरि॑क्ष॒ञ्चतु॒॑र्होता
। स वि॒ष्ठाः । स मे॑ ददातु प्र॒जां प॒शूनपुष्टि॒य्यँश॑ः ।
वि॒ष्ठाश्च॑ मे भूयात् । वा॒युः पञ्च॑होता । स प्रा॒णः । स मे॑ ददातु प्र॒जां प॒शूनपुष्टि॒य्यँश॑ः । प्रा॒णश्च॑ मे
भूयात् ।(8)
30703
च॒न्द्रमा॒ष्षड्ढो॑ता । स ऋ॒तून्क॑ल्पयाति । स मे॑ ददातु प्र॒जां प॒शूनपुष्टि॒य्यँश॑ः । ऋ॒तव॑श्च मे कल्पन्ताम् ।
अन्न॒ꣳ स॒प्तहो॑ता ।
स प्रा॒णस्य॑ प्रा॒णः । स मे॑ ददातु प्र॒जां प॒शूनपुष्टि॒य्यँश॑ः । प्रा॒णस्य॑ च मे प्रा॒णो
भू॑यात् । द्यौर॒ष्टहो॑ता । सो॑ऽनाधृ॒ष्यः ।(9)।
30704
स मे॑ ददातु प्र॒जां प॒शूनपुष्टि॒य्यँश॑ः । अ॒ना॒धृ॒ष्यश्च॑ भूयासम् । आ॒दि॒त्यो नव॑होता । स ते॑ज॒स्वी । स मे॑
ददातु प्र॒जां
प॒शूनपुष्टि॒य्यँश॑ः । ते॒ज॒स्वी च॑ भूयासम् । प्र॒जाप॑ति॒र्दश॑होता । स इ॒दꣳ सर्व॑म् । स
मे॑ ददातु प्र॒जां प॒शूनपुष्टि॒य्यँश॑ः । सर्व॑ञ्च मे भूयात् ।(10)।
प्र॒ति॒ष्ठा प्रा॒णश्च॑ मे भूयादनाधृ॒ष्यस्सर्व॑ञ्च मे भूयात् ।।7।
30700
(ब्रा॒ह्म॒णो य॒ज्ञो॓ऽग्निर्भ॒र्ता पृ॑थि॒वी प्र॑ति॒ष्ठाऽन्तरि॑क्षव्वि॒ष्ठा वा॒युः प्रा॒णश्च॒न्द्रमा॑
ऋ॒तूनन्नं॑ प्रा॒णस्य॑ प्रा॒णो द्यौर॑नाधृ॒ष्य आ॑दि॒त्यस्स ते॑ज॒स्वी प्र॒जाप॑तिरि॒दꣳ

सर्वं॑ सर्व॑ञ्च मे

भूयात् ।।)
30801

अ॒ग्निर्यजु॑र्भिः । स॒वि॒ता स्तोमैः॑ । इन्द्र॑ उक्थाम॒दैः । मि॒त्रावरु॑णाव॒ाशिषा॑ । अङ्गि॑रस॒ो धिष्णि॑यैर॒ग्निभि॑ः

। म॒रुत॑स्सदो

हविर्धा॒नाभ्या॑म् । आप॒ः प्रोक्ष॑णीभिः । ओष॑धयो ब॒र्हि॒षा॑ । अदि॑ति॒र्वेद्या॑ । सोमो॑ द॒ीक्षया॑ ।(11)
30802

त्वष्टे॒ध्मेन॑ । विष्णु॑र्य॒ज्ञेन॑ । वस॑व॒ आज्ये॑न । आ॒दि॒त्या दक्षि॑णाभिः । विश्वे॑ दे॒वा

ऊ॒र्जा । पू॒षा स्व॑गाक॒ारेण॑ । बृह॒स्पति॑ः

पुर॒ोधया॑ । प्र॒जाप॑तिरुद्गी॒थेन॑ । अ॒न्तरि॑क्षं प॒वित्रे॑ण । व॒ायुः पात्रैः॑ । अ॒ह श्र॒द्धया॑ ।(12)
30800

दी॒क्षया॒ पात्रै॒रेक॑ञ्च ।।8।
30901

सेनेन्द्र॑स्य । धेन॒ा बृह॒स्पतेः॑ । प॒त्थ्या॑ पू॒ष्णः । वाग्व॒ायोः । द॒ीक्षा सोम॑स्य । पृ॒थि॒व्य॑ग्नेः

। वसू॑ना॒ङ्गाय॒त्री । रु॒द्राणा॑न्त्रि॒ष्टुक् ।

आ॒दि॒त्याना॒ञ्जग॑ती । विष्णो॑रनु॒ष्टुक् ।(13)।
30902

वरु॑णस्य वि॒राट् । य॒ज्ञस्य॑ प॒ङ्क्तिः । प्र॒जाप॑ते॒रनु॑मतिः । मि॒त्रस्य॑ श्र॒द्धा । स॒वि॒तुः

प्रसू॑तिः । सूर्य॑स्य॒ मरी॑चिः । च॒न्द्रम॑सो रोहि॒णी ।

ऋषी॑णामरुन्ध॒ती । प॒र्जन्य॑स्य वि॒द्युत् । चत॑स्र॒ो दिश॑ः । चत॑स्रोऽवान्तरदि॒शाः । अह॑श्च॒

रात्रि॑श्च । कृ॒षिश्च॒ वृष्टि॑श्च । त्विषि॒श्चाप॑चितिश्च ।

आप॒श्चौष॑धयश्च । ऊर्क्च॑ सू॒नृता॑ च दे॒वाना॒ं पत्न॑यः ।(14)।
30900

अ॒नु॒ष्टुग्दिश॒ष्षट्च॑ ।9।
31001

दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे । अ॒श्विनो॑र्ब॒ाहुभ्या॑म् । पू॒ष्णो हस्ता॑भ्यां प्रति॑गृह्णामि

। राजा॑ त्व॒ा वरु॑णो नयतु देविदक्षिणे॒ऽग्नये॒

हिर॑ण्यम् । तेना॑मृत॒त्वम॑श्याम् । वयो॑ द॒ात्रे । मय॒ो मह्य॑मस्तु प्रतिग्रही॒त्रे । क इ॒दङ्कस्मा॑

अदात् । काम॒ः कामा॑य । कामो॑ द॒ाता ।(15)
31002

काम॑ः प्रतिग्रही॒ता । काम॑ँ समु॒द्रमाविश । कामे॑न त्व॒ा प्रति॑गृह्णामि । कामै॒तत्ते॑ । ए॒षा

ते॑ काम॒ दक्षि॑णा । उ॒त्ता॒नस्त्वा॑ङ्गीर॒सः

प्रति॑गृह्णातु । सोमा॑य॒ वास॑ः । रु॒द्राय॒ गाम् । वरु॑णा॒याश्व॑म् । प्र॒जाप॑तये॒ पुरु॑षम् ।(16) ।
31003
मन॑वे॒ तल्प॑म् । त्वष्ट्रे॒ऽजाम् । पू॒ष्णेऽवि॑म् । निर्ऋ॑त्या अश्वतरगर्द॒भौ । हि॒मव॑तो ह॒स्तिन॑म्
। ग॒न्ध॒र्वा॒प्स॒राभ्य॑स्स्रगलङ्क॒र॒णे ।
विश्वे॑भ्यो दे॒वेभ्यो॑ धा॒न्यम् । वा॒चेऽन्न॑म् । ब्रह्म॑ण ओद॒नम् । स॒मु॒द्रायाप॑ः ।(17)
31004
उ॒त्ता॒नाया॑ङ्गीर॒सायान॑ः । वै॒श्वा॒न॒राय॒ रथ॑म् । वै॒श्वा॒न॒रः प्र॒त्नथा॑ नाक॒मारु॑हत्
। दि॒वः पृ॒ष्ठम्भन्द॑मानस्सु॒मन्म॑भिः ।
स पू॑र्व॒वज्ज॒नय॑ज्ज॒न्तवे॒ धन॑म् । स॒मा॒नम॑ज्मा॒ परि॑याति॒ जागृ॑विः । राजा॑ त्वा॒ वरु॑णो
नयतु देविदक्षिणे वैश्वा॒न॒राय॒ रथ॑म् । तेना॑मृत॒त्वम॑श्याम् ।
वयो॑ दा॒त्रे । मयो॒ मह्य॑मस्तु प्रतिग्र॒ही॒त्रे ।(18)
31005
क इ॒दङ्कस्मा॑ अदात् । काम॒ः कामा॑य । कामो॑ दा॒ता । काम॑ः प्रतिग्र॒ही॒ता । काम॑ꣳ समु॒द्रमावि॑श ।
कामे॑न त्वा॒ प्रति॑गृह्णामि ।
कामै॒तत्ते॑ । ए॒षा ते॑ काम॒ दक्षि॑णा । उ॒त्ता॒नस्त्वा॑ङ्गीर॒सः प्रति॑गृह्णातु ।(19)
31000
दा॒ता पुरु॑ष॒मप॑ः प्रतिग्र॒ही॒त्रे नव॑ च ।।10।
31101
सु॒वर्ण॑ङ्घ॒र्मं परि॑वेद वे॒नम् । इन्द्र॑स्या॒त्मान॑न्दश॒धा चर॑न्तम् । अ॒न्तस्स॑मु॒द्रे
मन॑सा॒ चर॑न्तम् । ब्रह्मान्व॑विन्दद्द॒शह॑होता॒र॒मर्णे॑ ।
अ॒न्तः प्रवि॑ष्टश्शा॒स्ता जना॑नाम् । एक॒स्सन्ब॑हु॒धा वि॑चारः । श॒तꣳ शु॒क्राणि॒ यत्रैक॒ं
भव॑न्ति । सर्वे॒ वेदा॒ यत्रैक॒ं भव॑न्ति । सर्वे॒ होता॑रो॒ यत्रैक॒ं
भव॑न्ति । स॒मान॑सीन आ॒त्मा जना॑नाम् । (20)।
31102
अ॒न्तः प्रवि॑ष्टश्शा॒स्ता जना॑ना॒ꣳ सर्वा॑त्मा । सर्वा॑ः प्र॒जा यत्रैक॒ं भव॑न्ति । चतु॑र्होता॒रो
यत्र॑ सं॒पद॒ङ्गच्छ॑न्ति दे॒वैः । स॒मान॑सीन
आ॒त्मा जना॑नाम् । ब्रह्मेन्द्र॑म॒ग्निञ्जग॑तः प्रति॒ष्ठाम् । दि॒व आ॒त्मान॑ꣳ सवि॒तार॒ं बृह॒स्पति॑म्
। चतु॑र्होतार॒ं प्र॒दिशोऽनु॒ क्लृप्तम् । वा॒चो वी॒र्य॑न्तप॒साऽ
न्व॑विन्दत् । अ॒न्तः प्रवि॑ष्टङ्क॒र्तार॑मे॒तम् । त्वष्टार॑ꣳ रू॒पाणि॑ विकु॒र्वन्त॑ं विप॒श्चिम् । (21)
31103
अ॒मृत॑स्य प्रा॒णय॒ँज्ञमे॒तम् । चतु॑र्होतृणामा॒त्मान॑ङ्कवयो॒ निचि॑क्युः । अ॒न्तः प्रवि॑ष्टङ्क॒र्तार॑मे॒तम्
। दे॒वाना॒ं बन्धु॒ निहि॑त॒ङ्गुहा॑सु ।

अ॒मृते॑न क्लृ॒प्तय्यँ॒ज्ञमे॒तम् । चतु॑र्॒होतृणामा॒त्मान॑ङ्क॒वयो॒ निचि॑क्युः । श॒तन्नि॒युत॒ः
परि॑वेद॒ विश्वा॑ वि॒श्ववा॑रः । विश्व॑मि॒दव्वृ॑णाति । इन्द्र॑स्या॒त्मा
निहि॑त॒ः पञ्च॑होता । अ॒मृत॑न्दे॒वाना॒मायु॑ः प्र॒जाना᳚म् । (22)।
31104
इन्द्र॒ꣳ॒ राजा॑नꣳ सवि॒तार॑मे॒तम् । वा॒योरा॒त्मान॑ङ्क॒वयो॒ निचि॑क्युः । र॒श्मिꣳ र॑श्मी॒नां
मध्ये॒ तप॑न्तम् । ऋ॒तस्य॑ प॒दे क॒वयो॒ निपा᳚न्ति ।
य आ᳚ण्डको॒शे भुव॑नं बि॒भर्ति॑ । अनि॑र्भिण्ण॒स्सन्नथ॑ लो॒कान् वि॒चष्टे᳚ । यस्या᳚ण्डको॒शꣳ
शुष्म॑मा॒हुः प्रा॒णमुल्ब᳚म् । तेन॑ क्लृ॒प्तो॑ऽमृते॑ना॒हम॑स्मि ।
सु॒वर्ण॒ङ्कोश॒ꣳ॒ रज॑सा॒ परी॑वृतम् । दे॒वाना᳚व्वँसु॒धानी᳚व्विं॒राज᳚म् । (23)।
31105
अ॒मृत॑स्य पू॒र्णान्ता॑मु क॒लाव्विच॑क्षते । पाद॒ꣳ॒ षड्ढो॑तु॒र्न कि॑लावि॒विथ्से । येन॒र्तव॑ः
पञ्च॒धोत क्लृ॒प्ताः । उ॒त वा॑ ष॒ड्धा मन॒सोत क्लृ॒प्ताः ।
तꣳ षड्ढो॑तारमृ॒तुभि॑ः कल्प॑मानम् । ऋ॒तस्य॑ प॒दे क॒वयो॒ निपा᳚न्ति । अ॒न्तः प्रवि॑ष्टङ्क॒र्तार॑मे॒तम्
। अ॒न्तश्च॒न्द्रम॑सि॒ मन॑सा॒ चर॑न्तम् । स॒हैव सन्त॒न्न
विजा॑नन्ति दे॒वाः । इन्द्र॑स्या॒त्मान॑ꣳ श॒तधा॒ चर॑न्तम् । (24)।
31106
इन्द्रो॒ राजा॒ जग॑तो॒ य ईशे᳚ । स॒प्तहो॑ता स॒प्तधा॒ विक्लृ॒प्तः । परे॑ण॒ तन्तु॑ं परिषि॒च्यमानम्
। अ॒न्तरा॑दि॒त्ये मन॑सा॒ चर॑न्तम् । दे॒वाना॒ꣳ॒
हृद॑यं॒ ब्रह्मान्व॑विन्दत् । ब्रह्मै॒तद्ब्रह्म॑ण॒ उज्ज॑भार । अ॒र्क श्चोत॑न्तꣳ सरि॒रस्य॒
मध्ये᳚ । आ यस्मि᳚न्थ्स॒प्त पेर॑वः । मेह॑न्ति बहु॒लाꣳ श्रिय᳚म् । ब॒ह्व॒श्वामि॑न्द्र॒
गोम॑तीम् । (25)।
31107
अच्यु॑तां बहु॒लाꣳ श्रिय᳚म् । स हरि॑र्वसु॒वित्त॑मः । पे॒रुरिन्द्रा॑य पिन्वते । ब॒ह्व॒श्वामि॑न्द्र॒
गोम॑तीम् । अच्यु॑तां बहु॒लाꣳ श्रिय᳚म् ।
मह्य॒मिन्द्रो॒ निय॑च्छतु । श॒तꣳ श॒ता अ॑स्य यु॒क्ता हरी᳚णाम् । अ॒र्वाङा या॑तु॒ वसु॑भी र॒श्मिरिन्द्र॑ः
। प्रमꣳह॑माणो बहु॒लाꣳ श्रिय᳚म् । र॒श्मिरिन्द्र॑स्सवि॒ता
मे॒ निय॑च्छतु । (26)।
31108
घृतन्तेजो॒ मधु॑मदिन्द्रियम् । मय्य॒यम॒ग्निर्द॑धातु । हरि॑ः पत॒ङ्गः प॑ट॒री सु॑प॒र्णः ।
दि॒वि॒क्षयो॒ नभ॑सा॒ य एति॑ । स न॒ इन्द्र॑ः
कामव॒रन्द॑दातु । पञ्चा॑रञ्च॒क्रं परि॑वर्तते पृथु । हिर॑ण्यज्योतिस्सरि॒रस्य॒ मद्ध्ये᳚ । अज॑स्रञ्ज्योति॒र्नभ॑सा॒

सर्पँदेति । स नु इन्द्रः कामवुरन्दंदातु ।
सुप्त युंञ्जन्ति रथुमेकंचक्रम् । (27)।
31109
एको अश्वों वहति सप्तनामा । त्रिणाभिं चुक्रमुजरुमनर्वम् । येनेुमा विश्वा भुवंनानि तस्थुः
। भुद्रं पश्यंन्तु उपंसेदुरग्रें । तपों
दीुक्षामृषंयस्सुवुर्विदंः । ततंः क्षुत्रं बलुमोजंश्च जातम् । तदुस्मै देवा अुभि सन्नंमन्तु
। श्वेतः रुश्मिं बोंभुज्यमानम् । अुपान्नेतारं भुवंनस्य गोपाम् ।
इन्द्रन्निचिंक्युः परुमे व्योंमन्न् । (28)
31110
रोहिंणीः पिङ्गुला एकंरूपाः । क्षरंन्तीः पिङ्गुला एकंरूपाः । शुतः सुहस्राणि प्रयुतानि नाव्यानाम् ।
अुयय्यँश्श्वेतो रुश्मिः ।
परि सर्वंमिदञ्जगंत् । प्रजां पुशून्धनानि । अुस्माकंन्ददातु । श्वेतो रुश्मिः परि सर्वं
बभूव । सुवन्मह्यं पुशून् विश्वरूंपान् । पुतुङ्गमुक्तमसुंरस्य
मायया । (29)।
31111
हृदा पंश्यन्ति मनंसा मनीषिणंः । सुमुद्रे अुन्तः कुवयो विचंक्षते । मरींचीनां पुदमिंच्छन्ति
वेधसंः । पुतुङ्गो वाचुं मनंसा बिभर्ति ।
ताङ्गंन्धुर्वोऽवदुद्गर्भें अुन्तः । तान्द्योतंमानाः स्वुर्यं मनीषाम् । ऋतस्यं पुदे
कुवयो निपांन्ति । ये ग्राम्याः पुशवों विश्वरूंपाः । विरूंपास्सन्तों
बहुधैकंरूपाः । अुग्निस्ताः अग्रे प्रमुंमोक्तु देवः । (30)
31112
प्रजापंतिः प्रजयां सव्विंदानः । वीत स्तुकेंस्तुके । प्रप्रं युज्ञपंतिन्तिर । ये ग्राम्याः
पुशवों विश्वरूंपाः । विरूंपास्सन्तों
बहुधैकंरूपाः । तेषाः सप्तानामिह रन्तिंरस्तु । रायस्पोषाय सुप्रजास्त्वायं सुवीर्याय
। य आरुण्याः पुशवों विश्वरूंपाः । विरूंपास्सन्तों
बहुधैकंरूपाः । वायुस्ताः अग्रे प्रमुंमोक्तु देवः । प्रजापंतिः प्रजयां सव्विंदानः ।
इडांयै सृप्तङ्घृतवंच्चराचुरम् । देवा अन्वंविन्दुन्गुहां हितम् ।
य आरुण्याः पुशवों विश्वरूंपाः । विरूंपास्सन्तों बहुधैकंरूपाः । तेषाः सप्तानामिह
रन्तिंरस्तु । रायस्पोषाय सुप्रजास्त्वायं सुवीर्याय ।। (31)
31100
आत्मा जनानाव्विंकुर्वन्तंव्विपुश्चिं प्रजानांव्वँसुधानींव्विराजञ्चरंन्तुङ्गोमंतीं

मे॒ निय॑च्छ॒त्वेक॑चक्र॒व्व्यौँ॑मन्मा॒यया॑ दे॒व एक॑रूपा अ॒ष्टौ च॑ ।11।
31201
स॒हस्र॑शीर्॒षा पुरु॑षः । स॒ह॒स्रा॒क्षस्स॒हस्र॑पात् । स भूमि॑ं वि॒श्वतो॑ वृ॒त्वा । अत्य॑तिष्ठद्दशाङ्गु॒लम्
। पुरु॑ष ए॒वेदꣳ सर्व॑ँम् ।
यद्भू॒तं यच्च॒ भव्य॑ँम् । उ॒ताम॒तत्त्वस्येशा॑नः । यदन्ने॑नाति॒रोह॑ति । ए॒तावा॑नस्य महि॒मा । अतो॒
ज्यायाꣳश्च॒ पूरु॑षः । [32]
31202
पादो॑ऽस्य॒ विश्वा॑ भू॒तानि॑ । त्रि॒पाद॑स्या॒मृत॑न्दि॒वि । त्रि॒पादू॒र्ध्व उदै॒त्पुरु॑षः
। पादो॑ऽस्ये॒हाभ॑वा॒त्पुनः॑ । तत॒ो विष्व॒ङ्व्य॑क्रामत् ।
सा॒श॒ना॒न॒श॒ने अ॒भि । तस्मा॑द्वि॒राड॑जायत । वि॒राजो॒ अधि॒ पूरु॑षः । स जा॒तो अत्य॑रिच्यत ।
प॒श्चाद्भूमि॒मथो॑ पु॒रः । [33]
31203
यत्पुरु॑षेण ह॒विषा॑ । दे॒वा य॒ज्ञमत॑न्वत । व॒स॒न्तो अ॑स्यासी॒दाज्य॑ँम् । ग्री॒ष्म इ॒ध्मश्श॒रद्ध॒विः ।
स॒प्तास्या॑सन्परि॒धय॑ः ।
त्रिस्स॒प्त स॒मिध॑ः कृ॒ताः । दे॒वा यद्य॒ज्ञन्त॑न्वा॒नाः । अब॑ध्न॒न्पुरु॑षं प॒शुम् । तं य॒ज्ञं
ब॒र्॒हिषि॒ प्रौक्ष॑न्न् । पुरु॑षं जा॒तम॑ग्र॒तः । [34]
31204
तेन॑ दे॒वा अय॑जन्त । सा॒ध्या ऋष॑यश्च॒ ये । तस्मा॑द्य॒ज्ञात्स॑र्व॒हुत॑ः । सम्भृ॑तं पृषदा॒ज्यम् ।
प॒शूꣳस्ताꣳश्च॑क्रे वाय॒व्यान् ।
आ॒र॒ण्यान्ग्रा॒म्याश्च॒ ये । तस्मा॑द्य॒ज्ञात्स॑र्व॒हुत॑ः । ऋच॒स्सामा॑नि जज्ञिरे । छन्दाꣳसि
जज्ञि॒रे तस्मा॑त् । यजु॒स्तस्मा॑दजायत । [35]
31205
तस्मा॒दश्वा॑ अजायन्त । ये के चो॑भ॒याद॑तः । गावो॑ ह जज्ञि॒रे तस्मा॑त् । तस्मा॑ज्जा॒ता अ॑जा॒वय॑ः ।
यत्पुरु॑षं॒ व्य॑दधुः ।
क॒ति॒धा व्य॑कल्पयन् । मुखं॒ किम॑स्य॒ कौ बा॒हू । कावू॒रू पादा॑वुच्येते । ब्रा॒ह्म॒णो॑ऽस्य॒
मुख॑मासीत् । बा॒हू रा॑ज॒न्य॑ः कृ॒तः । [36]
31206
ऊ॒रू तद॑स्य॒ यद्वैश्य॑ः । प॒द्भ्याꣳ शू॒द्रो अ॑जायत । च॒न्द्रमा॒ मन॑सो जा॒तः । चक्षो॒स्सूर्यो॑ अजायत
। मुखा॒दिन्द्र॑श्चा॒ग्निश्च॑ ।
प्रा॒णाद्वा॒युर॑जायत । नाभ्या॑ आसीद॒न्तरि॑क्षम् । शी॒र्ष्णो द्यौस्सम॑वर्तत । प॒द्भ्यां भूमि॒र्दिश॒श्श्रोत्रा॑त्
। तथा॑ लो॒काꣳ अ॑कल्पयन् । [37]
31207

वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसस्तु पारे । सर्वाणि रूपाणि विचित्य
धीरः । नामानि कृत्वाऽभिवदन्
यदास्ते । धाता पुरस्ताद्यमुदाजहार । शक्रः प्रविद्वान्प्रदिशश्चतस्रः । तमेवं
विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते । यज्ञेन
यज्ञमयजन्त देवाः । तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः सचन्ते । यत्र पूर्वे
साध्यास्सन्ति देवाः ।। [38]
पूरुषः पुरोऽग्रतोऽजायत कृतोऽकल्पयन्नासन्द्वे च ।। 12 ।।
31200
(ज्यायानधि पूरुषः । अन्यत्र पुरुषः ।।)
31301
अद्भ्यः सम्भूतः पृथिव्यै रसाच्च । विश्वकर्मणस्समवर्तताधि । तस्य त्वष्टा विदधद्रूपमेति
। तत्पुरुषस्य विश्वमाजानमग्रे ।
वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसः परस्तात् । तमेवं विद्वानमृत
इह भवति । नान्यः पन्था विद्यतेऽयनाय । प्रजापतिश्चरति
गर्भे अन्तः । अजायमानो बहुधा विजायते । [39]
31302
तस्य धीराः परिजानन्ति योनिम् । मरीचीनां पदमिच्छन्ति वेधसः । यो देवेभ्य आतपति । यो
देवानां पुरोहितः । पूर्वो
यो देवेभ्यो जातः । नमो रुचाय ब्राह्मये । रुचं ब्राह्मं जनयन्तः । देवा अग्रे
तदब्रुवन् । यस्त्वैवं ब्राह्मणो विद्यात् । तस्य देवा असन्वशे ।
ह्रीश्च ते लक्ष्मीश्च पत्न्यौ । अहोरात्रे पार्श्वे । नक्षत्राणि रूपम् । अश्विनौ
व्यात्तम् । इष्टं मनिषाण । अमुं म

40000

।।चतुर्थःप्रश्नःप्रारंभः।।

सन्त्वा सिञ्चामि यजुषा प्रजामायुर्धनञ्च ओम् शान्तिश्शान्तिश्शन्तिः

40101

प॒रे॒यु॒वाꣳसं॑ प्र॒वतो॑ म॒हीरनु॑ ब॒हुभ्यः॒ पन्था॑मनपस्पशा॒नम् । वै॒व॒स्व॒तꣳ स॒ङ्गम॑न॒ञ्जना॑नाय्यँ॒मꣳ

राजा॑नꣳ ह॒विषा॑ दुवस्यत । इ॒दन्त्वा॒

वस्त्रं॑ प्रथ॒मन्वाग॒न्नपै॒तदू॑ह॒ यदि॒हाबि॑भः पु॒रा । इ॒ष्टापू॒र्तमनु॒ संप॑श्य॒ दक्षि॑णा॒य्यँथा॑

ते द॒त्तं ब॑ह॒धा विब॑न्धुषु । इ॒मौ यु॑नज्मि ते व॒ह्नी असु॑नीथाय वो॒ढवे॑ ।

याभ्याँ॒य्यँ॒मस्य॒ साद॑नꣳ सुकृ॒ताञ्चापि॑ गच्छतात् । पू॒षा त्वे॒तश्च्या॑वयतु॒ प्रवि॒द्वानन॑ष्टपशु॒र्भुव॑नस्य

गो॒पाः । स त्वै॒तेभ्यः॒ परि॑ददात्पि॒तृभ्यो॒ऽग्निर्दे॒वेभ्य॑

स्सुवि॒दत्रे॑भ्यः । पू॒षेमा आशा॒ अनु॑वेद॒ सर्वा॒स्सो अ॒स्माꣳ अभ॑यतमेन नेषत् । स्व॒स्ति॒दा

अघृ॑णि॒स्सर्व॑वी॒रोऽप्र॑युच्छन्पु॒र एतु॒ प्रवि॒द्वान् । (1)

40102

आयु॑र्वि॒श्वायुः॒ परि॑पासति त्वा पू॒षा त्वा॑ पातु॒ प्रप॑थे पु॒रस्ता॑त् । यत्रास॑ते सु॒कृ॒तो

यत्र॒ ते य॒युस्तत्र॑ त्वा दे॒वस्स॑वि॒ता द॑धातु ।

भुव॑नस्य पत इ॒दꣳ ह॒विः । अ॒ग्नये॑ र॒यिम॑ते॒ स्वाहा॑ । पुरु॑षस्य सयाव॒र्यपे॑द॒घानि॑ मृज्महे

। यथा॑ नो॒ अत्र॒ नाप॑रः पु॒रा ज॒रस॒ आय॑ति । पुरु॑षस्य

सयावरि वि ते॑ प्रा॒णम॑सि स्रसम् । शरी॑रेण म॒हीमि॒हि॑ स्व॒धयेहि॑ पि॒तॄनुप॑ प्र॒जया॒ऽस्मानि॒हाव॑ह

। मैवम्मा॒ꣳस्ता प्रि॑ये॒ऽहन्दे॒वी स॒ती पि॑तृलो॒कय्यँदै॑षि ।

वि॒श्ववा॑रा॒ नभ॑सा॒ सव्व्यँ॑यन्त्यु॒भौ नो॑ लो॒कौ पय॑सा॒ऽभ्याव॑वृथ्स्व । (2)

40103

इ॒यन्नारी॑ पतिलो॒कव्वृँ॒णा॒ना निप॑द्यत॒ उप॑ त्वा मर्त्य॒ प्रेत॑म् । विश्वं॑ पु॒रा॒णमनु॒ पा॒लय॑न्ती॒

तस्यै॑ प्र॒जान्द्रवि॑णञ्चे॒ह धे॑हि । उदी॑र्ष्व

नार्य॒भि जीव॑लोकमि॒तासु॑मे॒तमुप॑शेष॒ एहि॑ । ह॒स्त॒ग्रा॒भस्य॑ दिधि॒षोस्त्वमे॒तत्पत्यु॑र्जनि॒त्वम॒भि

संब॑भूव । सु॒वर्ण॒ꣳ हस्ता॑दा॒ददा॑ना मृतस्य॑ श्रि॒यै ब्रह्म॑णे॒

तेज॑से॒ बला॑य । अत्रै॒व त्वमि॒ह व॒यꣳ सु॒शेवा॒ विश्वा॒स्स्पृधो॑ अ॒भिमा॑तीर्जयेम । धनु॒र्हस्ता॑दा॒ददा॑ना

मृतस्य॑ श्रि॒यै क्ष॒त्रायौज॑से॒ बला॑य । अत्रै॒व त्वमि॒ह

व॒यꣳ सु॒शेवा॒ विश्वा॒स्स्पृधो॑ अ॒भिमा॑तीर्जयेम । मणि॒ꣳ हस्ता॑दा॒ददा॑ना मृ॒तस्य॒ श्रि॒यै

वि॒शे पुष्ट्यै॒ बला॑य । अत्रै॒व त्वमि॒ह व॒यꣳ सु॒शेवा॒ विश्वा॒स्स्पृधो॑

अ॒भिमा॑तीर्जयेम । (3)

40104

इ॒मम॑ग्ने चम॒सं मा विजी॑ह्वरः प्रि॒यो दे॒वाना॑मु॒त सो॒म्याना॑म् । ए॒ष यश्च॑म॒सो दे॑व॒पान॒स्तस्मि॑न्दे॒वा
अ॒मृता॑ मादयन्ताम् । अ॒ग्नेर्वर्म॒
परि॒ गोभि॑र्व्ययस्व॒ सं प्रोर्णु॑ष्व॒ मेद॑सा॒ पीव॑सा च । नेत्त्वा॑ धृ॒ष्णुर् हर॑सा॒ जर्हृ॑षाणो॒
दध॑द्विध॒क्ष्यन्पर्य॒ङ्खया॑तै । मैन॑मग्ने॒ विद॑हो॒ माऽभिशो॑चो॒ माऽस्य॒
त्वच॑ञ्चिक्षिपो॒ मा शरी॑रम् । य॒दा शृ॒तङ्करवो॑ जातवे॒दोऽथेमे॑नं॒ प्रहि॑णुतात्पि॒तृभ्यः॑
। शृ॒तय्यँ॒दा कु॒रसि॑ जातवे॒दोऽथेमे॑नं॒ परि॑दत्तात्पि॒तृभ्यः॑ । य॒दा
गच्छा॒त्यसु॑नीतिमे॒तामथा॑ दे॒वाना॑व्वँश॒नीर्भ॑वाति । सूर्य॑न्ते॒ चक्षु॒र्गच्छतु॒ वात॑मा॒त्मा
द्याञ्च॒ गच्छ॑ पृथि॒वीञ्च॒ धर्म॑णा । अ॒पो वा॑ गच्छ॒ यदि॒ तत्र॑ ते
हि॒तमोष॑धीषु॒ प्रति॑तिष्ठा शरी॑रैः । अ॒जो भा॒गस्तप॑सा॒ तन्त॑पस्व॒ तन्ते॑ शो॒चिस्त॑पतु॒
तन्ते॑ अ॒र्चिः । यास्ते॑ शि॒वास्त॒नुवो॑ जातवेद॒स्ताभि॑र्वहे॒मꣳ
सु॒कृ॒ता॒य्यँत्र॑ लो॒काः । अ॒यव्वै॑ त्वम॒स्मादधि॒ त्वमे॒तद॒यव्वै॑ तद॑स्य॒ योनि॑रसि । वै॒श्वा॒न॒रः
पु॒त्रः पि॒त्रे लो॑कु॒कृञ्जा॑तवेद॒ो वहे॑मꣳ सु॒कृ॒ता॒य्यँत्र॑ लो॒काः । (4)
40100
वि॒द्वान॒भ्याव॑वृथ्स्व॒ाभिमा॑तीर्जयेम॒ शरी॑रैश्च॒त्वारि॑ च ।।1।।
40201
य ए॒तस्य॑ प॒थो गो॒प्तार॒स्तेभ्य॒स्स्वाहा॒ य ए॒तस्य॑ प॒थो र॑क्षि॒तार॒स्तेभ्य॒स्स्वाहा॒
य ए॒तस्य॑ प॒थो॑भिऽर॑क्षि॒तार॒स्तेभ्य॒स्स्वाहा॑ऽऽख्यात्रे
स्वाहा॑ऽपाख्यात्रे स्वाहा॑ऽभि॒लाल॑पते॒ स्वाहा॑ऽप॒लाल॑पते॒ स्वाहा॒ऽग्नये॑ कर्म॒कृते॒
स्वाहा॒ यमत्र॒ नाधी॒मस्तस्मै॒ स्वाहा॑ । यस्त॑ इ॒द्ध्मञ्ज॒भर॑थ्सिष्विद॒ानो
मू॒र्धानं॑व्वाँत॒ तप॑ते त्वा॒या । दिवो॒ विश्व॑स्माथ्सीमघायु॒त उ॑रुष्यः । अ॒स्मात्त्वमधि॑ जा॒तो॑ऽसि॒
त्वद॒यञ्जा॑यतां॒ पुनः॑ । अ॒ग्नये॑ वैश्वान॒राय॑ सुव॒र्गाय॑
लो॒काय॒ स्वाहा॑ ।। (5)
40200
य ए॒तस्य॒ त्वत्पञ्च॑ ।।2।।
40301
प्र के॒तुना॑ बृह॒ता भा॑त्य॒ग्निरा॒विर्विश्वा॑नि वृष॒भो रो॑रवीति । दि॒वश्चि॒दन्ता॒दुप॒ मामु॒दान॑ड॒पामु॒पस्थे॑
महि॒षो व॑वर्ध । इ॒दन्त॒ एकं॑ प॒र
ऊ॒त॒ एक॑न्तृ॒तीये॑न॒ ज्योति॑षा॒ संवि॑शस्व । स॒व्वेँश॑नस्त॒नुवै॒ चारु॑रेधि प्रि॒यो दे॒वानां॑
पर॒मे स॒धस्थे॑ । नाके॑ सुप॒र्णमु॒प यत्पत॑न्तꣳ हृ॒दा वेन॑न्तो
अ॒भ्यच॑क्षत त्वा । हिर॑ण्यपक्षव्वँरु॑णस्य दू॒तय्यँ॒मस्य॒ योनौ॑ शकु॒नं भु॑र॒ण्युम् । अति॑द्रव
सारमे॒यौ श्वानौ॑ चतु॒र॒क्षौ श॒बलौ॑ सा॒धुना॑ प॒था ।

अथा॑ पि॒तॄन्थ्सु॑वि॒दत्रा॒ꣳ अपी॑हि य॒मेन॒ ये स॑ध॒मादं॒ मद॑न्ति । यौ ते॒ श्वानौ॑ यमरक्षि॒तारौ॑
चतु॒र॒क्षौ प॑थि॒रक्षी॑ नृ॒चक्ष॑सा । ताभ्या॑ꣳ राज॒न्परि॑ देह्येन
स्व॒स्ति चा॑स्मा अनमी॒वञ्च॑ धेहि ।(6)
40302
उ॒रु॒ण॒सावसु॒तृपा॑वुलुम्ब॒लौ य॒मस्य॑ दू॒तौ च॑रतो॒ वशा॒ꣳ अनु॑ । ताव॒स्मभ्य॒न्दृ॒शये॒
सूर्या॑य॒ पुन॑र्दत्ता॒ वसु॑म॒द्येह भ॒द्रम् । सोम॒ एके॑भ्यः
पवते घृतमेक॒ उपा॑सते । येभ्यो॒ मधु॑ प्र॒धाव॑ति॒ ताꣳश्चि॑दे॒वापि॑ गच्छतात् । ये यु॒द्ध्यन्ते
प्र॒धने॑षु॒ शूरा॑सो॒ ये त॑नु॒त्यजः॑ । ये वा॑ स॒हस्र॑दक्षिणा॒स्ताꣳ
श्चि॑दे॒वापि॑ गच्छतात् । तप॑सा॒ ये अ॑नाधृ॒ष्यास्तप॑सा॒ ये सुव॑र्ग॒ताः । तपो॒ ये च॑क्रि॒रे
म॒हत्ताꣳश्चि॑दे॒वापि॑ गच्छतात् । अश्म॑न्वती रेवती॒स्सꣳ र॑भध्व॒
मुत्ति॑ष्ठत प्रत॑रता सखायः । अत्रा॑ जहाम॒ ये अस॒न्नशे॑वाश्शि॒वान् व॒यम॒भि वाजा॒नुत्त॑रेम । (7)
40303
यद्वै दे॒वस्य॑ सवि॒तुः प॒वित्र॒ꣳ स॒हस्र॑धार॒व्वित॑तम॒न्तरि॑क्षे । येनापु॑ना॒दिन्द्र॒मना॑र्त॒मार्त्यै॒
तेना॒हं माꣳ स॒र्वत॑नुं पुनामि । या रा॒ष्ट्रात्प॒न्नादप॒
यन्ति॒ शाखा॑ अ॒भिमृ॑ता नृ॒पति॑मि॒च्छमा॑नाः । धा॒तुस्तास्सर्वाः॒ पव॑नेन पू॒ताः प्र॒जया॒स्मान्र॒य्या
वर्च॑सा॒ सꣳसृ॑जाथ । उद्वयन्तम॑स॒स्परि॒ पश्य॑न्तो॒
ज्योति॒रुत्त॑रम् । दे॒वन्दे॑व॒त्रा सूर्य॒मग॑न्म॒ ज्योति॑रु॒त्तमम् । धा॒ता पु॑नातु सवि॒ता
पु॑नातु । अ॒ग्नेस्तेज॑सा॒ सूर्य॑स्य॒ वर्च॑सा ।। (8)
40300
धे॒ह्युत्त॑रेमा॒ष्टौ च॑ ।।3।
40401
यन्ते॑ अ॒ग्निमम॑न्थाम वृष॒भाये॑व॒ पक्त॑वे । इ॒मन्तꣳ श॑मयामसि क्षी॒रेण॑ चोद॒केन॑ च । यन्त्वम॑ग्ने
स॒मद॑ह॒स्त्वमु॒ निर्वा॑पया॒ पुनः॑ ।
क्या॒म्बूरत्र॑ जायतां पाकदू॒र्वा व्य॑ल्कशा । शीति॑के॒ शीति॑कावति॒ ह्लादु॑के॒ ह्लादु॑कावति
। म॒ण्डूक्या॑ सुसङ्गमये॒म स्व॑ग्निꣳ श॒मय॑ । शन्ते॑ धन्व॒न्या
आप॒श्शमु॑ ते सन्त्वनू॒क्याः॑ । शन्ते॑ समु॒द्रिया॒ आप॒श्शमु॑ ते सन्तु॒ वर्ष्याः॑ । शन्ते॒
स्रव॑न्तीस्त॒नुवे॒ शमु॑ ते सन्तु॒ कूप्याः॑ । शन्ते॑ नीहा॒रो व॑र्षतु॒ शमु॒
पृष्वाऽव॑शीयताम् । (9)
40402
अव॑ सृज॒ पुन॑रग्ने पि॒तृभ्यो॒ यस्त॒ आहु॑त॒श्चर॑ति स्व॒धाभिः॑ । आयु॒र्वसा॑न॒ उप॑ यातु॒
शेष॒ꣳ सङ्ग॑च्छतान्त॒नुवा॑ जातवेदः । सङ्ग॑च्छस्व

पि॒तृभि॒स्स स्व॒धाभि॒स्समि॑ष्टापू॒र्तेन॑ पर॒मे व्यो॑मन्न् । यत्र॒ भूम्यै॑ वृ॒णसे॒ तत्र॑
गच्छ॒ तत्र॑ त्वा दे॒वस्स॑वि॒ता द॑धातु । यत्ते॑ कृ॒ष्णश्श॑कु॒न आ॑तु॒तोद॑
पिपी॒लस्स॒र्प उ॒त वा॒ श्वाप॑दः । अ॒ग्निष्टद्वि॒श्वाद॑नृ॒णङ्कृ॑णोतु॒ सोम॑श्च॒ यो ब्रा॑ह्म॒णमा॑वि॒वेश॑
। उत्ति॒ष्ठात॑स्त॒नुव॒ꣳ॒ संभ॑रस्व॒ मेह गात्र॒मव॑हा॒ मा शरी॑रम् ।
यत्र॒ भूम्यै॑ वृणसे॒ तत्र॑ गच्छ॒ तत्र॑ त्वा दे॒वस्स॑वि॒ता द॑धातु । इ॒दन्त॒ एक॑ं पु॒र ऊ॑त॒
एक॑न्तृ॒तीये॑न॒ ज्योति॑षा॒ संवि॑शस्व । सु॒व्वेश॑नस्त॒नुवै॒ चारु॑रेधि
प्रि॒यो दे॒वानां᳚ पर॒मे स॒धस्थे᳚ । उत्ति॑ष्ठ॒ प्रेहि॒ प्रद्र॒वौक॑ः कृणुष्व पर॒मे व्यो॑मन्न्
। य॒मेन॒ त्वय्यँ॒म्या॑ सव्ँ॒विदा॒नोत्त॒मन्नाकु॒मधि॑ रोहे॒मम् । अश्म॑न्वती
रेवती॒र्यद्वै दे॒वस्य॑ सवि॒तुः प॒वित्र॒य्याँ रा॒ष्ट्रात्प॒न्नादुद्व॒यन्तम॑स॒स्परि॑ धा॒ता
पु॑नातु । अ॒स्मात्त्वमधि॑ जा॒तो॑ऽसि॒ त्वद॒यञ्जा॑यतां॒ पुन॑ः । अ॒ग्नये॑ वैश्वान॒राय॑
सुव॒र्गाय॑ लो॒काय॒ स्वाहा᳚ ।। (10)
40400
अव॑शीयताꣳ स॒धस्थे॒ पञ्च॑ च ।।4।
40501
आया॑तु दे॒वस्सु॒मना॑भिरू॒तिभि॒र्य॒मो ह॑वे॒ह प्रय॑ताभिर॒क्ता । आसी॑दताꣳ सु॒प्रय॑ते॑ह ब॒र्हिष्यूर्जा॑यजात्यै मम॑
शत्रु॒हत्यै᳚ ।
य॒मे इ॑व॒ यत॑माने॒ यदै॒तं प्रवा॑म्भर॒न्मानु॑षा देव॒यन्त॑ः । आसी॑दत॒ स्वमु॑ लो॒कव्ँ॒विदा॑ने
स्वासु॒स्थे भ॑वत॒मिन्द॑वे नः । य॒माय॒ सोमꣳ॑ सुनुत य॒माय॑
जुहुता ह॒विः । य॒मꣳ ह॑ य॒ज्ञो ग॑च्छत्य॒ग्निर्दू॑तो॒ अर॑ङ्कृतः । य॒माय॑ घृ॒तव॑द्ध॒विर्जु॑होत॒
प्र च॑ तिष्ठत । स नो॑ दे॒वेष्वाय॑मद्दी॒र्घमायु॒ः प्र जी॒वसे᳚ । य॒माय॒
मधु॑मत्तम॒ꣳ॒ राज्ञे॑ ह॒व्यञ्जु॑होतन । इ॒दन्नम॒ ऋषि॑भ्यः पूर्व॒जेभ्य॒ः पूर्वे᳚भ्यः पथि॒कृद्भ्य॑ः । (11)
40502
योऽस्य॒ कौष्ठ्य॒ जग॑तः पार्थि॑व॒स्यैक॑ इद्व॒शी । य॒मं भ॑ङ्ग्यश्रवो गा॑य॒ यो राजा॑नप॒रोद्ध्य॑ः
। य॒मङ्गाय॑ भङ्ग्य॒श्रवो॒ यो राजा॑नप॒रोद्ध्य॑ः ।
येना॒पो न॒द्यो॑ धन्वा॑नि॒ येन॒ द्यौः पृ॑थि॒वी दृ॒ढा । हि॒र॒ण्य॒क॒क्ष्यान् सु॒धुरा॑न् हिरण्या॒क्षान॑यश्श॒फान्
। अश्वा॑न॒नश्य॑तो दा॒नय्यँ॒मो रा॑जाभि॒ तिष्ठ॑ति ।
य॒मो दा॑धार पृथि॒वीय्यँ॒मो विश्व॑मि॒दञ्जग॑त् । य॒माय॒ सर्व॒मित्र॑स्थे॒ यत् प्रा॒णद्वा॒युर॑क्षि॒तम्
। यथा॒ पञ्च॒ यथा॒ षड्य॒था पञ्च॑ द॒शर्ष॑यः । य॒मय्योँ॒
विद्या॒थ्स ब्रू॒याद्य॒थैक ऋषि॒र्विजान॒ते । (12)
40503
त्रिक॑द्रुकेभि॒ः पत॑ति॒ षडु॒र्वीरेकु॒मिद्बृ॒हत् । गा॒य॒त्री त्रि॒ष्टुप्छन्दा॒ꣳ॑सि॒ सर्वा॒

ता यम आहिता । अहरहर्नयमानो गामश्वं पुरुषञ्जगत् ।
वैवस्वतो न तृप्यति पञ्चभिर्मानवैर्यमः । वैवस्वते विविच्यन्ते यमे राजनि ते
जनाः । ये चेह सत्येनेच्छन्ते य उ चानृतवादिनः । ते राजन्निह
विविच्यन्तेऽथा यन्ति त्वामुप । देवांश्च ये नमस्यन्ति ब्राह्मणांश्चापचित्यति
। यस्मिन्वृक्षे सुपलाशे देवैस्संपिबते यमः । अत्रा नो विश्पतिः
पिता पुराणा अनुवेनति ।। (13)
40500
पथिकृद्भ्यो विजानतेऽनु वेनति ।।5।।
40601
वैश्वानरे हविरिदञ्जुहोमि साहस्रमुत्सं शतधारमेतम् । तस्मिन्नेष पितरं पितामहं
प्रपितामहं बिभरत्पिन्वमाने । द्रप्सश्चस्कन्द
पृथिवीमनु द्यामिमञ्च योनिमनु यश्च पूर्वः । तृतीयय्योनिमनु सञ्चरन्तन्द्रप्सञ्जुहोम्यनु
सप्त होत्राः । इमं समुद्रं शतधारमुत्सव्व्यँच्यमानं भुवनस्य
मध्ये । घृतन्दुहानामदितिञ्जनायाग्ने मा हिंसीः परमे व्योमन्न् । अपेत वीत
वि च सर्पतातो येऽत्र स्थ पुराणा ये च नूतनाः । अहोभिरद्भिरक्तुभि
र्व्यक्तय्यँमो ददात्ववसानमस्मै । सवितैतानि शरीराणि पृथिव्यै मातुरुपस्थ आदधे ।
तेभिर्युज्यन्तामघ्नियाः । (14)
40602
शुनव्वाँहाश्शुनन्नाराश्शुनङ्कृषतु लाङ्गलम् । शुनव्वँरत्रा बद्ध्यन्तां शुनमष्ट्रामुदिङ्गय
शुनासीरा शुनमस्मासु धत्तम् । शुनासीरा
विमाव्वाँचय्यँद्दिवि चक्रथुः पयः । तेनेमामुप सिञ्चतम् । सीते वन्दामहे त्वाऽर्वाची
सुभगे भव । यथा नस्सुभगाससि यथा नस्सुफला ससि ।
सवितैतानि शरीराणि पृथिव्यै मातुरुपस्थ आदधे । तेभिरदिते शं भव । विमुच्यध्वमघ्निया
देवयाना अतारिष्म तमसस्पारमस्य । ज्योतिरापाम
सुवरगन्म । (15)
40603
प्र वाता वान्ति पतयन्ति विद्युत उदोषधीर्जिहते पिन्वते सुवः । इरा विश्वस्मै
भुवनाय जायते यत्पर्जन्यः पृथिवीं रेतसाऽवति ।
यथा यमाय हार्म्यमवपन्पञ्च मानवाः । एवव्वँपामि हार्म्यय्यँथासाम जीवलोके भूरयः
। चितस्स्थ परिचित ऊर्ध्वचितश्श्रयध्वं पितरो देवता ।
प्रजापतिर्वस्सादयतु तया देवतया । आप्यायस्व सन्ते ।। (16)

40600
अ॒ग्नि॒या अग॑न्म स॒प्त च॑ ।।6।।
40701
उत्ते॑ तभ्नोमि पृथि॒वीन्त्वत्परी॒मल्लो॒कन्नि॒दध॒न्मो अ॒ह॒ꣳ रि॑षम् । ए॒ताꣳ स्थूणां॑ पि॒तरो॑
धारयन्तु॒ तेऽत्रा॑ य॒मस्सादना॑त्ते मिनोतु॒ । उप॑सर्प
मा॒तर॒ं भूमि॑मे॒ताम॑ु॒रु॒व्यच॑सं पृथि॒वीꣳ सु॒शेवा॑म् । ऊर्ण॑म्रदा यु॒व॒तिर्दक्षि॑णावत्ये॒षा
त्वा॑ पातु॒ निर्-ऋ॑त्या उ॒पस्थे॑ । उच्छ्व॑ञ्चस्व पृथिवि॒ मा विबा॑धिथा
स्सूपाय॒नास्मै॑ भव सूपवञ्च॒ना । मा॒ता पु॒त्रय्यँथा॑सि॒चाभ्ये॑नं भूमि वृणु । उ॒च्छ्वञ्च॑माना पृथि॒वी
हि तिष्ठ॑सि स॒हस्र॒ं मित॒ उप॒ हि श्रय॑न्ताम् । ते गृ॒हासो॑
मधु॒श्चुत॒ो विश्वाहा॑स्मै शर॒णास्स॒न्त्वत्र॑ । एणी॑र्धा॒ना हरि॑णी॒रर्जु॑नीस्सन्तु धे॒नव॑ः
। तिल॑वथ्सा ऊर्ज॑मस्मै॒ दुहा॑ना॒ विश्वाहा॑ स॒न्त्वनप॑स्फुरन्तीः । (17)
40702
ए॒षा ते॑ यम॒साद॑ने स्व॒धा निधी॑यते गृ॒हे । अक्षि॑ति॒र्नाम॑ ते असौ । इ॒दं पि॒तृभ्य॒ः प्रभ॑रेम
ब॒र्॒हिर्दे॒वेभ्यो॒ जीव॑न्त॒ उत्त॑रं भरेम ।
तत्त्व॑मार॒ोहास॒ो मेध्यो॒ भव॑य्यँमेन॒ त्वय्यँम्या॑ सव्विंद॒ानः । मा त्वा॑ वृ॒क्षौ संबा॑धिष्ट॒ाम्मा
मा॒ता पृ॑थिवि॒ त्वम् । पि॒तॄन् ह्यत्र॒ गच्छा॒स्येधा॑सय्यँम॒राज्ये॑ ।
मा त्वा॑ वृ॒क्षौ संबा॑धेथां॒ मा मा॒ता पृ॑थि॒वी म॒ही । वै॒व॒स्व॒तꣳ हि गच्छा॑सि यम॒राज्ये॒
विरा॑जसि । न॒ळं प्लु॒वमारो॑है॒तन्न॒ळेन॑ प॒थोऽन्वि॑हि । स त्वन्न॒ळप्लु॑वो
भू॒त्वा॒ सन्त॑र॒ प्रत॒रोत्त॑र । (18)
40703
स॒वि॒तैताऽनि॒ शरी॑राणि पृथि॒व्यै मा॒तुर॒ुपस्थ॒ आद॑धे । तेभ्य॑ः पृथिवि॒ शं भ॑व । षड्ढो॑ता॒
सूर्य॑न्ते॒ चक्षु॒र्गच्छतु॒ वात॑म॒ात्मा द्याञ्च॒ गच्छ॑
पृथि॒वीञ्च॒ धर्म॑णा । अ॒पो वा॑ गच्छ॒ यदि॒ तत्र॑ ते हि॒तमोष॑धीषु॒ प्रति॑तिष्ठा॒ शरी॑रैः
। पर॑ं मृत्यो॒ अनु॒परे॑हि॒ पन्था॒य्यँस्ते॒ स्व इत॑रो देव॒याना॑त् । चक्षु॑ष्मते
शृण्व॒ते ते॑ ब्रवीमि॒ मा न॑ः प्र॒जाꣳ री॑रिष॒न्मोत वी॒रान् । शव्वाँ॒त॒श्शꣳ हि त॒े घृणि॒श्शमु॒
ते स॒न्त्वोष॑धीः । कल्प॑न्ताम्मे॒ दिश॑श्शग्माः । पृथि॒व्यास्त्वा॑
लो॒के सा॑दयाम्यमुष्य॒ शर्मा॑सि पि॒तरो॑ दे॒वता॑ । प्र॒जाप॑तिस्त्वा सादयतु॒ तया॑ दे॒वत॑या
। अ॒न्तरि॑क्षस्य त्वा दि॒वस्त्वा॑ दि॒शान्त्वा॒ नाक॑स्य त्वा पृष्ठे
ब्र॒ध्नस्य॑ त्वा वि॒ष्टपे॑ सादयाम्य॒मुष्य॒ शर्मा॑सि पि॒तरो॑ दे॒वता॑ । प्र॒जाप॑तिस्त्वा सादयतु॒ तया॑ दे॒वत॑या ।।
(19)
40700

अन॑पस्फुरन्ती॒रुत्त॑र दे॒वत॑या॒ द्वे च॑ ।।7।
40801
अ॒पू॒पवा॑न्घृ॒तवा॑ꣳश्च॒रुरेह सी॑दतूत्तभ्नु॒वन्पृ॑थि॒वीन्द्यामु॒तोपरि॑ । यो॒नि॒कृत॑ः
पथि॒कृत॑स्सपर्यत॒ ये दे॒वाना॑ङ्घृ॒तभा॑गा इ॒ह स्थ । ए॒षा ते
यम॒साद॑ने स्व॒धा निधी॑यते गृ॒हे॑ऽसौ । दशा॑क्षर॒ा ताः र॑क्षस्व॒ ताङ्गो॑पायस्व॒ तान्ते॒
परि॑ददामि॒ तस्या॑न्त्वा॒ मा द॑भन्पि॒तरो॑ दे॒वता॑ । प्र॒जाप॑तिस्त्वा
सादयतु॒ तया॑ दे॒वत॑या । अ॒पू॒पवा॑ञ्छृ॒तवा॑न्क्षी॒रवा॒न्दधि॑वा॒न्मधु॑माꣳश्च॒रुरेह
सी॑दतूत्तभ्नु॒वन्पृ॑थि॒वीन्द्यामु॒तोपरि॑
। यो॒नि॒कृत॑ः पथि॒कृत॑स्सपर्यत॒ ये दे॒वानाꣳ
शृ॒तभा॑गाः क्षी॒रभा॑गा॒ दधि॑भागा॒ मधु॑भागा इ॒ह स्थ । ए॒षा ते॑ यम॒साद॑ने स्व॒धा निधी॑यते
गृ॒हे॑ऽसौ । श॒ताक्ष॑रा स॒हस्रा॑क्षर॒ायुता॑क्षर॒ाऽच्यु॑ताक्षर॒ा ताः
र॑क्षस्व॒ ताङ्गो॑पायस्व॒ तान्ते॒ परि॑ददामि॒ तस्या॑न्त्वा॒ मा द॑भन्पि॒तरो॑ दे॒वता॑ । प्र॒जाप॑तिस्त्वा
सादयतु॒ तया॑ दे॒वत॑या ।। (20)।।8।।
40901
ए॒तास्ते॑ स्व॒धा अ॒मृता॑ः करोमि॒ यास्ते॑ धा॒नाः प॑रि॒कि॒राम्यत्र॑ । तास्ते॑ य॒मः पि॒तृभि॑स्सव्विँद॒ानोऽत्र॑
धे॒नूः का॑म॒दुघा॑ः करोतु ।
त्वामर्जु॒नौष॑धीना॒ं पयो॑ ब्र॒ह्माण॒ इद्वि॑दुः । तासा॑न्त्वा॒ मध्या॒दा द॑दे च॒रुभ्य॒ो अपि॑धातवे
। दू॒र्वाणाꣳ स्त॒ंबमाह॑रै॒तां प्रि॒यत॑मा॒ं मम॑ । इ॒मान्दिश॑ं मनु॒ष्या॑णा॒ं
भूयि॒ष्ठानु॒ वि रो॑हतु । काशा॑नाः स्त॒ंबमाह॑र॒ रक्ष॑सा॒मप॑हत्यै । य ए॒तस्यै॑ दि॒शः प॒राभ॑वन्नघा॒यव॒ो
यथा॒ तेनाभ॑वा॒न्पुन॑ः । द॒र्भाणाꣳ स्त॒ंबमाह॑र पितृ॒णा
मोष॑धीं प्रि॒याम् । अन्वस्यै॒ मूल॑ञ्जीवा॒दनु॒ काण्ड॒मथ॒ो फल॑म् । (21)
40902
लो॒कं पृ॑ण॒ ता अ॑स्य॒ सूद॑दोहसः । शव्वाँ॑त॒श्शँ॑हि त॒े घृणि॒श्शमु॑ ते स॒न्त्वोष॑धीः । कल्पन्ता॒न्ते॒
दिश॒स्सर्वा॑ः । इ॒दमे॒व मेतोप॑रा॒
मार्ति॑माराम॒ काञ्चन । तथा॒ तद॒श्विभ्या॑ङ्कृतं मि॒त्रेण॒ वरु॑णेन च । व॒रु॒णो वा॑रयादि॒दन्दे॒वो
वन॒स्पति॑ः । आर्त्यै॒ निर्ऋ॑त्यै॒ द्वेषा॑च्च वन॒स्पति॑ः ।
विधृ॑तिरसि॒ विधा॑रया॒स्मद॒घा द्वेषाꣳ॑सि श॒मि श॒मया॒स्मद॒घा द्वेषाꣳ॑सि य॒व य॒वया॒स्मद॒घा
द्वेषाꣳ॑सि । पृ॒थि॒वीङ्ग॑च्छा॒न्तरि॑क्षङ्गच्छ॒ दिव॑ङ्गच्छ॒ दिशो॑ गच्छ॒
सुव॑र्गच्छ॒ सुव॑र्गच्छ॒ दिशो॑ गच्छ॒ दिव॑ङ्गच्छा॒न्तरि॑क्षङ्गच्छ पृ॒थि॒वीङ्ग॑च्छा॒पो वा॑ गच्छ॒
यदि॒ तत्र॑ ते हि॒तमोष॑धीषु॒ प्रति॑तिष्ठा॒ शरी॑रैः । अश्म॑न्वती रेवती॒र्यद्वै

देवस्य सवितुः पवित्रय्याँ राष्ट्रात्पन्नादुद्वयन्तमंसस्परिं धाता पुंनातु ।। (22)
40900
फलं पुनातु ।।9।
41001
आ रोहतायुर्जरसंङ्गृणाना अनुपूर्वय्यँतमाना यतिष्ट । इह त्वष्टा सुजनिमा सुरत्नो
दीर्घमायुः करतु जीवसे वः । यथाहान्यनुपूर्वं
भवन्ति यथर्तव ऋतुभिर्यन्ति क्लृप्ताः । यथा न पूर्वमपरो जहात्येवा धातरायूंषि
कल्पयैषाम् । न हिं ते अग्ने तनुवै क्रूरञ्चकार मर्त्यः ।
कुपिर्बभस्ति तेजनं पुनर्जरायु गौरिव । अप नश्शोशुचदघमग्ने शुशुध्या रयिम्
। अप नश्शोशुचदघं मृत्यवे स्वाहा । अनड्वाहमन्वारभामहे स्वस्तये ।
स न इन्द्र इव देवेभ्यो वह्निस्संपारणो भव । (23)
41002
इमे जीवा विमृतैरावर्तिन्नभूद्भद्रा देवहूतिर्नो अद्य । प्राञ्चोगामानृतये
हसाय द्राघीय आयुः प्रतरान्दधानाः । मृत्योः पदय्योपयन्तो
यदैम द्राघीय आयुः प्रतरान्दधानाः । आप्यायमानाः प्रजया धनेन शुद्धाः पूता भवथ
यज्ञियासः । इमञ्जीवेभ्यः परिधिन्दधामि मा नोऽनु गादपरो
अर्धमेतम् । शतञ्जीवन्तु शरदः पुरूचीस्तिरो मृत्युन्दध्महे पर्वतेन । इमा नारीरविधवास्सुपत्नीराञ्जनेन
सर्पिषा संमृशन्ताम् । अनश्रवो अनमीवा
स्सुशेवा आरोहन्तु जनयो योनिमग्ने । यदाञ्जनन्त्रैककुदञ्जातं हिमवतस्परि
। तेनामृतस्य मूलेनारातीर्जंभयामसि । यथा त्वमुद्भिनथ्स्योषधे पृथिव्या
अधि । एवमिम उद्भिन्दन्तु कीर्त्या यशसा ब्रह्मवर्चसेन । अजोऽस्यजास्मदघा द्वेषांसि
यवोऽसि यवयास्मदघा द्वेषांसि ।। (24)
41000
भव जंभयामसि त्रीणि च ।10।
41101
अप नश्शोशुचदघमग्ने शुशुध्या रयिम् । अप नश्शोशुचदघम् । सुक्षेत्रिया सुगातुया
वसूया च यजामहे । अप नश्शोशुचदघम् ।
प्रयद्भन्दिष्ठ एषां प्रास्माकासश्च सूरयः । अप नश्शोशुचदघम् । प्रयदग्नेस्सहस्वतो
विश्वतो यन्ति सूरयः । अप नश्शोशुचदघम् । प्रयत्ते अग्ने सूरयो
जायेमहि प्र ते वयम् । अप नश्शोशुचदघम् । (25)
41102

त्वꣳ हि विश्वतोमुख विश्वतः परिभूरसि । अप नश्शोशुचदघम् । द्विषो नो विश्वतोमुखाऽति नावेव पारय । अप नश्शोशुचदघम् । स नस्सिन्धुमिव नावयाति पर्षा स्वस्तये । अप नश्शोशुचदघम् । आपः प्रवणादिव यतीरपास्मथ्स्यन्दतामघम् ।
अप नश्शोशुचदघम् । उद्बनादुदकानीवापास्मथ्स्यन्दतामघम् । अप नश्शोशुचदघम् । आनन्दाय प्रमोदाय पुनरागाꣳ स्वान्गृहान् ।
अप नश्शोशुचदघम् । न वै तत्र प्रमीयते गौरश्वः पुरुषः पशुः । यत्रेदं ब्रह्म क्रियते परिधिर्जीवनायकमप नश्शोशुचदघम् ।।(26)
41100
अघमघञ्चत्वारि च ।।11।
41201
अपश्याम युवतिमाचरन्तीं मृताय जीवां परिणीयमानाम् । अन्धेन या तमसा प्रावृताऽसि प्राचीमवाचीमवयन्नरिष्ट्यै । मयैतां
माꣳस्तां भ्रियमाणा देवी सती पितृलोकय्यँदैषि । विश्ववारा नभसा सव्व्यँयन्त्युभौ नो लोकौ पयसाऽऽवृणीहि । रयिष्ठामग्निं मधुमन्तमूर्मिणमूर्जं स्सन्तन्त्वा पयसोप सꣳसदेम । सꣳ रय्या समु वर्चसा सचस्वा नस्स्वस्तये । ये जीवा ये च मृता ये जाता ये च जन्त्याः । तेभ्यो घृतस्य धारयितुं मधुधारा व्युन्दती । माता रुद्राणान्दुहिता वसूनाꣳ स्वसादित्यानाममृतस्य नाभिः । प्रणुवोचञ्चिकितुषे जनाय मागामनागामदितिव्वँधिष्ट । पिबतूदकन्तृणान्यत्तु । ओमुथ्सृजत ।। (27)
41200
वधिष्ट द्वे च ।।12।
40000
परेयुवाꣳसं प्रविद्वान्भुवनस्याभ्यावव्वृथ्स्वाजो भागोऽयव्वैँ चतुश्चत्वारिꣳशत् । य एतस्य त्वत्पञ्च । प्रकेतुनेदन्ते नाके सुपर्णमपीहि यौ ते ये युद्ध्यन्ते तपसाऽश्मन्वती रेवतीस्सꣳरभध्वꣳ सहस्रधारमष्टाविꣳशतिः । यन्ते यत्त उत्तिष्ठात इदन्त उत्तिष्ठ प्रेह्यश्मन् यद्वा उद्वयमयं पञ्चविꣳशतिः । आयातु त्रिꣳशत् । वैश्वानरे तस्मिन्द्रप्स इममपेताहोभिर्युज्यन्तामग्निया अदिते पारव्वँ आप्यायस्व सप्तविꣳशतिः । उत्ते गृहेऽक्षितिस्तेभ्यः पृथिवि षड्ढोता परं मे शग्माः पृथिव्या अन्तरिक्षस्य द्वात्रिꣳशत् । अपूपवानसौ दश शत दश । एतास्ते ते दिशस्सर्वा इदमशमन्विꣳशतिः । आरोहत तनुवै ििक्रूरञ्चकार पुनर्मृत्यवे मा नोनुगाद्दब्रह इमा नारीः परि त्रयोविꣳशतिः । अपनस्सुक्षेत्रिया प्रयद्धन्दिष्ठः प्रयदग्नेः

प्रयत्तौ॑ अग्ने॒ त्वꣳ हि द्विष॒स्सन॒स्सिन्धु॒माप॑ः प्रव॒णादु॑द्व॒नादा॑न॒न्दाय॒ न वै तत्र॒

यत्रे॒दञ्चतु॑र्विꣳशतिः । अप॑श्या॒मावृ॑णीहि॒ द्वाद॑श द्वादश ।

प॒रे॒यु॒वाꣳस॒माया᳚त्वे॒तास्तौ॑ स॒प्तविꣳ॑शतिः ।

प॒रे॒यु॒वाꣳस॒मोमुथ्सृ॒जत ।

50000
।। पञ्चमप्रश्नः प्रारंभः ।। ।। तैत्तिरीयोपनिषत् ।।
50101
शन्नो॑ मि॒त्रश्शव्वँ॑रु॑णः । शन्नो॑ भवत्वर्य॒मा । शन्न॒ इन्द्रो॒ बृह॒स्पति॑ः । शन्नो॒ विष्णु॑रुरुक्र॒मः
। नमो॒ ब्रह्म॑णे । नम॑स्ते वायो ।
त्वमे॒व प्र॒त्यक्षं॒ ब्रह्मा॑सि । त्वामे॒व प्र॒त्यक्षं॒ ब्रह्म॑ वदिष्यामि । ऋ॒तव्वँ॑दिष्यामि
। स॒त्यव्वँ॑दिष्यामि । तन्माम॑वतु । तद्व॒क्तार॑मवतु । अव॑तु॒ माम् ।
अव॑तु व॒क्तार॓म् । ओम् शान्ति॒श्शान्ति॒श्शान्ति॑ः ।। (1)
50100
स॒त्यव्वँ॑दिष्यामि॒ पञ्च॑ च ।।1।।
50201
शीक्षाव्व्याँ॑ख्यास्या॒मः । वर्ण॒ः स्वरः । मात्रा॒ बलम् । साम॑ सन्ता॒नः । इत्युक्तश्शी॓क्षाद्ध्या॒यः ।। (2)
50200
शीक्षां पञ्च॑ ।।2।।
50301
स॒ह नौ॒ यशः । स॒ह नौ ब्र॒ह्मव॒र्चसम् । अथातस्सꣳहिताया उपनिषदव्व्याँ॑ख्यास्या॒मः ।
पञ्चस्वधिक॑रणे॒षु । अधिलोकमधि
ज्यौतिषमधिविद्यमधिप्रज॑मद्ध्या॒त्मम् । ता महासꣳहिता इ॑त्याच॒क्षते । अथा॑धिल॒ोकम् । पृथिवी
पू॒र्व॑रू॒पम्
। द्यौरुत्त॑ररू॒पम् । आका॑शस्स॒न्धिः । (3)
50302
वायु॑स्सन्धा॒नम् । इत्य॑धिल॒ोकम् । अथा॑धिज्यौ॒तिषम् । अग्निः पू॒र्व॑रू॒पम् । आदित्य उत्त॑ररू॒पम् ।
आ॑पस्स॒न्धिः ।
वैद्युत॑स्सन्धा॒नम् । इत्य॑धिज्यौ॒तिषम् । अथा॑धिवि॒द्यम् । आचार्यः पू॒र्व॑रू॒पम् । (4)
50303
अन्तेवास्युत्त॑ररू॒पम् । वि॑द्या स॒न्धिः । प्रवचनꣳ सन्धा॒नम् । इत्य॑धिवि॒द्यम् । अथाधि॒प्रजम् । माता
पू॒र्व॑रूपम् ।
पितोत्त॑ररू॒पम् । प्र॒जा स॒न्धिः । प्रजननꣳ सन्धा॒नम् । इत्यधि॒प्रजम् । (5)
50304
अथाद्ध्या॒त्मम् । अधराहनुः पू॒र्व॑रू॒पम् । उत्तराहनुरुत्त॑ररू॒पम् । वाख्स॒न्धिः । जिह्वा॑ सन्धा॒नम् ।
इत्यद्ध्या॒त्मम् । इतीमा
म॑हास॒ꣳहिताः । य एवमेता महासꣳहिता व्याख्या॑ता वे॒द । सन्धीयते प्रज॑या प॒शुभिः ।

ब्रह्मवर्च॑सेनान्नाद्येन सुवर्ग्येण॑ लोके॒न ।। (6)
50300
स॒न्धिराचार्य॑ः पू᳚र्व॑रू॒पमित्यधि॒प्रजल्लोँ॑के॒न ।।3।।
50401
यश्छन्द॑सामृष॒भो वि॒श्वरू॑पः । धन्दो॒भ्योऽद्ध्य॒मृता᳚थ्सम्ब॒भूव॑ । स मेन्द्रो॑ मे॒धया᳚ स्पृणोतु
। अ॒मृत॑स्य देव॒ धार॑णो भूयासम् ।शरीरं॑
मे॒ विच॑र्॒षणम् । जि॒ह्वा मे॒ मधु॑मत्तमा । कर्णा᳚भ्या॒ं भूरि॒ विश्रु॑वम् । ब्रह्म॑णः को॒शो॑ऽसि
मे॒धयापि॑हितः । श्रु॒तं मे॑ गोपाय । आ॒वह॑न्ती वितन्वा॒ना । (7)
50402
कु॒र्वा॒णा चीर॑मा॒त्मन॑ः । वासा॑ꣳसि॒ मम॒ गाव॑श्च । अ॒न्न॒पा॒ने च॑ सर्व॒दा । ततो॑ मे॒
श्रिय॒माव॑ह । लो॒म॒शां प॒शुभि॑स्स॒ह स्वाहा᳚ ।आ मा॑
यन्तु ब्रह्मचा॒रिण॒स्स्वाहा᳚ । यशो॒ जने॑ऽसानि॒ स्वाहा᳚ । श्रेया॒न् वस्य॑सोऽसानि॒ स्वाहा᳚
। तन्त्वा॑ भग॒ प्रवि॑शानि॒ स्वाहा᳚ । स मा॑ भग॒ प्रवि॑श॒ स्वाहा᳚ ।
तस्मि᳚न्थ्स॒हस्र॑शाखे । निभ॑गा॒हन्त्वयि॑ मृजे॒ स्वाहा᳚ । यथाप॒ः प्रव॑ता॒ यन्ति॑ । यथा॒ मासा॑
अहर्ज॒रम् । ए॒वं मां ब्र॑ह्मचा॒रिण॑ः । धात॒राय॑न्तु
स॒र्वत॒स्स्वाहा᳚ । प्र॒ति॒वे॒शो॑ऽसि॒ प्र मा॑ भाहि॒ प्र मा॑ पद्यस्व ।। (8)
50400
वि॒त॒न्वा॒ना वि॑श॒ स्वाहा॑ स॒प्त च॑ ।।4।।
50501
भूर्भुव॒स्सुव॒रिति॒ वा ए॒तास्ति॒स्रो व्याहृ॑तयः । तासा॑मुहस्मै॒ ताञ्च॑तु॒र्थीम् । माहा॑चमस्य॒ः प्रवे॑दयते । मह॒
इति॑ । तद्ब्रह्म॑ ।
स आ॒त्मा । अङ्गा᳚न्य॒न्या दे॒वता᳚ः । भूरिति॒ वा अ॒यल्लो॒ँकः । भुव॒ इत्य॒न्तरि॑क्षम् । सुव॒रित्य॒सौ लो॒कः
। (9)
50502
मह॒ इत्या॑दि॒त्यः । आ॒दि॒त्येन॒ वाव सर्वे॑ लो॒का महीय॑न्ते । भूरिति॒ वा अ॒ग्निः । भुव॒ इति॑
वायुः । सुव॒रित्या॑दि॒त्यः । मह॒ इति॑ च॒न्द्रमा᳚ः ।
च॒न्द्रम॑सा॒ वाव सर्वा॑णि॒ ज्योती॑ꣳषि॒ महीय॑न्ते । भूरिति॒ वा ऋच॑ः । भुव॒ इति॒ सामा॑नि । सुव॒रिति॒
यजू॑ꣳषि । (10)
50503
मह॒ इति॒ ब्रह्म॑ । ब्रह्म॑णा॒ वाव सर्वे॑ वे॒दा महीय॑न्ते । भूरिति॑ वै प्रा॒णः । भुव॒ इत्य॑पा॒नः
। सुव॒रिति॑ व्या॒नः । मह॒ इत्यन्न॑म् ।अन्ने॑न॒
वाव सर्वे᳚ प्रा॒णा महीय॑न्ते । ता वा ए॒ताश्च॑तस्रश्चतु॒र्धा । चत॑स्रश्चतस्रो॒ व्याहृ॑तयः । ता

यो वेद॑ । स वे॑द॒ ब्रह्म॑ । सर्वे᳚ऽस्मै दे॒वा ब॒लिमाव॑हन्ति ।। (11)
50500
अ॒सौ लो॒को यजू᳘ꣳषि॒ वेद॒ द्वे च॑ ।।5।।
50601
स य ए॒षो᳚ऽन्तर्हृ॑दय आका॒शः । तस्मि॑न्न॒यं पुरु॑षो मनो॒मय॑ः । अमृ॑तो हिर॒ण्मय॑ः । अन्त॑रेण॒ ताल॑ुके
। य ए॒ष स्तन॑
इवाव॒लंब॑ते । से᳚न्द्रयो॒निः । यत्रा॒सौ के॑शा॒न्तो वि॒वर्त॑ते । व्य॒पोह्य॑ शीर्॒षकपा॒ले ।
भूरि॑त्य॒ग्नौ प्रति॑तिष्ठति । भुव॒ इति॑ वा॒यौ । (12)
50602
सुव॒रित्या॑दि॒त्ये । मह॒ इति॒ ब्रह्म॑णि । आ॒प्नोति॒ स्वारा᳚ज्यम् । आ॒प्नोति॒ मन॑स॒स्पति᳚म्
। वाक्प॑ति॒श्चक्षु॑ष्पतिः । श्रोत्र॑पतिर्वि॒ज्ञान॑पतिः ।
ए॒तत्तत॑ो भवति । आका॒शश॑रीरं॒ ब्रह्म॑ । स॒त्यात्म॑प्रा॒णारा॑मं॒ मन॑ आनन्दम् । शान्ति॑समृद्धम॒मृत॑म्
। इति॑ प्राचीनयो॒ग्योपा᳚स्व । (13)
50600
वा॒यावमृ॒तमेक॑ञ्च ।।6।।
50701
पृथि॒व्य॑न्तरि॑क्ष॒न्द्यौर्दिशो॑ऽवान्तरदि॒शाः । अ॒ग्निर्वा॒युरा॑दि॒त्यश्च॒न्द्रमा॒ नक्ष॑त्राणि
। आप॒ ओष॑धयो॒ वन॒स्पत॑य आका॒श आ॒त्मा ।
इत्य॑धिभू॒तम् । अथाध्द्य॒त्मम् । प्रा॒णो व्या॒नो॑ऽपा॒न उ॑दा॒नस्स॑मा॒नः । चक्षु॒ः श्रोत्र॒ं
मनो॒ वाक्त्वक् । चर्म॑ मा॒ꣳस स्नावास्थि॑ म॒ज्जा । ए॒तद॑धि
वि॒धाय॒र्षि॒रवो॑चत् । पाङ्क्त॒ं वा इ॒दꣳ सर्व᳚म् । पाङ्क्ते॑नै॒व पाङ्क्त॑ स्पृणो॒तीति॑ । (14)
50700
सर्व॒मेक॑ञ्च ।।7।।
50801
ओमिति॒ ब्रह्म॑ । ओमिती॒दꣳ सर्व᳚म् । ओमित्ये॒तद॑नुकृति ह स्म॒ वा अ॒प्योश्रा॑व॒येत्याश्रा॑वयन्ति ।
ओमिति॒ सामा॑नि गायन्ति ।
ओꣳशोमिति॑ श॒स्त्राणि॑ शꣳसन्ति । ओमित्य॑ध्व॒र्युः प्र॑तिग॒रं प्रति॑गृणाति । ओमिति॒ ब्रह्मा॒
प्रसौ॑ति । ओमित्य॑ग्निहो॒त्रमनु॑जानाति । ओमिति॑ ब्राह्म॒णः
प्र॑व॒क्ष्यन्ना॑ह॒ ब्रह्मोपा᳚प्नवा॒नीति॑ । ब्रह्मै॒वोपा᳚प्नोति । (15)
50800
ओन्दश॑ ।।8।।
50901

ऋतञ्च स्वाद्ध्यायप्रवचने च । सत्यञ्च स्वाद्ध्यायप्रवचने च । तपश्च स्वाद्ध्यायप्रवचने च । दमश्च स्वाद्ध्यायप्रवचने च । शमश्च

स्वाद्ध्यायप्रवचने च । अग्नयश्च स्वाद्ध्यायप्रवचने च । अग्निहोत्रञ्च स्वाद्ध्यायप्रवचने च

। अतिथयश्च स्वाद्ध्यायप्रवचने च । मानुषञ्च स्वाद्ध्याय-

प्रवचने च । प्रजा च स्वाद्ध्यायप्रवचने च । प्रजनश्च स्वाद्ध्यायप्रवचने च । प्रजातिश्च स्वाद्ध्यायप्रवचने

च । सत्यमिति सत्यवचा राथीतरः ।

तप इति तपोनित्यः पौरुशिष्टिः । स्वाद्ध्यायप्रवचने एवेति नाको मौद्गल्यः । तद्धि तपस्तद्धि तपः । (16)

50900

प्रजा च स्वाद्ध्यायप्रवचने च षट्च ।।9।।

51001

अहँव्वृक्षस्य रेरिवा । कीर्तिः पृष्ठङ्गिरेरिव । ऊर्द्ध्वपवित्रो वाजिनीव स्वमृतमस्मि

। द्रविणꣳ सवर्चसम् । सुमेधा अमृतोक्षितः ।

इति त्रिशङ्कोर्वेदानुवचनम् । (17)

51000

अहꣳ षट् ।।10।।

51101

वेदमनूच्यायार्योऽन्तेवासिनमनुशास्ति । सत्यव्वँद । धर्मञ्चर । स्वाद्ध्यायान्मा प्रमदः । आचार्याय प्रियन्धनमाहृत्य प्रजातन्तुं

मा व्यवच्छेत्सीः । सत्यान्न प्रमदितव्यम् । धर्मान्न प्रमदितव्यम् । कुशलान्न प्रमदितव्यम्

। भूत्यै न प्रमदितव्यम्। स्वाद्ध्यायप्रवचनाभ्यान्न

प्रमदितव्यम् । (18)

51102

देवपितृकार्याभ्यान्न प्रमदितव्यम् । मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव । अतिथिदेवो भव । यान्यनवद्यानि

कर्माणि । तानि सेवितव्यानि । नो इतराणि । यान्यस्माकँ सुचरितानि । तानि त्वयोपास्यानि । (19)

51103

नो इतराणि । ये के चास्मच्छ्रेयाꣳसो ब्राह्मणाः । तेषान्त्वयाऽऽसनेन प्रश्वसितव्यम् । श्रद्धया देयम्

। अश्रद्धयाऽदेयम् ।

श्रि॒या दे॒यम् । ह्रि॒या दे॒यम् । भि॒या दे॒यम् । संवि॑दा दे॒यम् । अथ यदि ते कर्मविचिकित्सा वा
वृत्तविचिकि॑त्सा वा॒ स्यात् । (20)
51104
ये तत्र ब्राह्मणाः॑स्संम॒र्शिनः । युक्ता॑ आयु॒क्ताः । अलूक्षा॑ धर्मकामा॒स्स्युः । यथा ते॑ तत्र वर्ते॒रन् ।
तथा तत्र॑ वर्ते॒थाः ।
अथाभ्या॑ख्याते॒षु । ये तत्र ब्राह्मणाः॑स्संमर्शिनः । युक्ता॑ आयु॒क्ताः । अलूक्षा॑ धर्मकामा॒स्स्युः
। यथा ते॑ तेषु॑ वर्ते॒रन् । तथा तेषु॑ वर्ते॒थाः ।
एष॑ आदे॒शः । एष उ॑पदे॒शः । एषा वे॑दोप॒निषत् । एतद॑नुशा॒सनम् । एवमुपा॑सित॒व्यम् । एवमु
चैत॑दुपा॒स्यम् ।। (21)
51100
स्वाद्ध्यायप्रवचनाभ्यान्न प्रम॑दित॒व्यन्तानि त्वयो॑पास्या॒नि स्यात्तेषु॑ वर्ते॒रन्थ्स॒प्त च॑ ।।11।
51201
शन्नो॑ मि॒त्रश्शव्वँरु॑णः । शन्नो॑ भवत्वर्य॒मा । शन्न॒ इन्द्रो॒ बृह॒स्पतिः॑ । शन्नो॒ विष्णु॑रुरुक्र॒मः
। नमो॒ ब्रह्म॑णे । नम॑स्ते वायो ।
त्वमे॒व प्र॒त्यक्षं॒ ब्रह्मा॑सि । त्वामे॒व प्र॒त्यक्षं॒ ब्रह्मावा॑दिषम् । ऋ॒तम॑वादिषम् । स॒त्यम॑वादिषम्
। तन्मामा॑वीत् । तद्व॒क्तार॑मावीत् । आवी॒न्माम् ।
आवी॑द्व॒क्तार॑म् । ओं शान्ति॒श्शान्ति॒श्शान्तिः॑ ।। (22)
51200
स॒त्यम॑वादिषं॒ पञ्च॑ च ।।1 2 ।।
51301
स॒हना॑ववतु । स॒ह नौ॑ भुनक्तु । स॒ह वी॒र्यं॑ करवावहै । ते॒ज॒स्वि ना॒वधीतमस्तु॒ मा वि॑द्विषा॒वहै॑
। ओं शान्ति॒श्शान्ति॒श्शान्तिः॑।। (23)
51300
स॒ह ना॑ववतु॒ पञ्च॑ ।। 13 ।।
51401
ब्र॒ह्म॒विदा॑प्नोति॒ पर॑म् । तदे॒षाभ्यु॑क्ता । स॒त्यं ज्ञा॒नम॑न॒न्तं ब्रह्म॑ । यो वेद॒ निहि॑त॒ङ्गुहा॑यां
पर॒मे व्यो॑मन्न् । सो॑ऽश्नु॒ते सर्वा॒न्कामा॑न्थ्स॒ह ।
ब्रह्म॑णा विप॒श्चितेति॑ । तस्मा॒द्वा एतस्मा॑दात्मन॑ आका॒शस्सं॑भू॒तः । आ॒का॒शाद्वा॒युः ।
वा॒योर॒ग्निः । अ॒ग्नेरापः॑ । अ॒द्भ्यः पृ॑थि॒वी । पृ॒थि॒व्या ओष॑धयः ।
ओष॑धी॒भ्योऽन्न॑म् । अन्ना॒त्पुरु॑षः । स वा एष पुरुषोऽन्न॑रस॒मयः । तस्येद॑मेव॒ शिरः । अयन्दक्षि॑णः
प॒क्षः । अयमुत्त॑रः प॒क्षः । अयमात्मा॑ ।
इदं॑ पुच्छं॑ प्रति॒ष्ठा । तदप्येष श्लो॑को भ॒वति । (24)

51402
अन्नाद्वै प्रजाः प्रजायन्ते । याः काश्च पृथिवीं श्रिताः । अथो अन्नेनैव जीवन्ति
। अथैनदपि यन्त्यन्ततः । अन्नꣳ हि भूतानाञ्ज्येष्ठम् ।
तस्मात्सर्वौषधमुच्यते । सर्वं वै तेऽन्नमाप्नुवन्ति । येऽन्नं ब्रह्मोपासते । अन्नꣳ
हि भूतानाञ्ज्येष्ठम् । तस्मात्सर्वौषधमुच्यते । अन्नाद्भूतानि जायन्ते ।
जातान्यन्नेन वर्धन्ते । अद्यतेऽत्ति च भूतानि । तस्मादन्नन्तदुच्यत इति । तस्माद्वा एतस्मादन्नरसमयात्
। अन्योऽन्तर आत्मा प्राणमयः ।
तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य प्राण
एव शिरः । व्यानो दक्षिणः पक्षः ।
अपान उत्तरः पक्षः । आकाश आत्मा । पृथिवी पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति । (25)
51403
प्राणन्देवा अनु प्राणन्ति । मनुष्याः पशवश्च ये । प्राणो हि भूतानामायुः ।
तस्मात्सर्वायुषमुच्यते । सर्वमेव त आयुर्यन्ति ।
ये प्राणं ब्रह्मोपासते । प्राणो हि भूतानामायुः । तस्मात्सर्वायुषमुच्यत इति । तस्यैष एव
शारीर आत्मा । यः पूर्वस्य । तस्माद्वा एतस्मात्
प्राणमयात् । अन्योऽन्तर आत्मा मनोमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य
पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य
यजुरेव शिरः । ऋग्दक्षिणः पक्षः । सामोत्तरः पक्षः । आदेश आत्मा । अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा
। तदप्येष श्लोको भवति । (26)
51404
यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कदाचनेति ।
तस्यैष एव शारीर आत्मा ।
यः पूर्वस्य । तस्माद्वा एतस्मान्मनोमयात् । अन्योऽन्तर आत्मा विज्ञानमयः । तेनैष पूर्णः
। स वा एष पुरुषविध एव । तस्य पुरुषविधताम् ।
अन्वयं पुरुषविधः । तस्य श्रद्धैव शिरः । ऋतन्दक्षिणः पक्षः । सत्यमुत्तरः पक्षः । योग
आत्मा । महः पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति । (27)
51405
विज्ञानं यज्ञन्तनुते । कर्माणि तनुतेऽपि च । विज्ञानन्देवास्सर्वे । ब्रह्म ज्येष्ठमुपासते
। विज्ञानं ब्रह्म चेद्वेद । तस्माच्चेन्न
प्रमाद्यति । शरीरे पाप्मनो हित्वा । सर्वान्कामान्त्समश्नुत इति । तस्यैष एव शारीर आत्मा
। यः पूर्वस्य । तस्माद्वा एतस्माद्विज्ञानमयात् ।

अन्योऽन्तर आत्माऽऽनन्दमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम्
। अन्वयं पुरुषविधः । तस्य प्रियमेव शिरः ।
मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा । तदप्येष श्लोको
भवति ।(28)
51406
असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद । सन्तमेनन्तो विदुरिति । तस्यैष
एव शारीर आत्मा ।
यः पूर्वस्य । अथातोऽनुप्रश्नाः । उता विद्वानमुल्लोकं प्रेत्य । कश्चन गच्छती
(3) । आहो विद्वानमुल्लोकं प्रेत्य । कश्चित्समश्नुता (3) उ ।
सोऽकामयत । बहु स्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा । इदꣳ सर्वमसृजत
। यदिदङ्किञ्च । तत्सृष्ट्वा । तदेवानु प्राविशत् ।
तदनुप्रविश्य । सच्च त्यच्चाभवत् । निरुक्तञ्चानिरुक्तञ्च । निलयनञ्चानिलयनञ्च ।
विज्ञानञ्चाविज्ञानञ्च । सत्यञ्चानृतञ्च सत्यमभवत् । यदिदङ्किञ्च ।
तत्सत्यमित्याचक्षते । तदप्येष श्लोको भवति । (29)
51407
असद्वा इदमग्र आसीत् । ततो वै सदजायत । तदात्मान स्वयमकुरुत । तस्मात्तत्सुकृतमुच्यत इति
। यद्वै तत्सुकृतम् ।
रसो वै सः । रस ह्येवायल्लँब्ध्वाऽऽनन्दी भवति । को ह्येवान्यात्कः प्राण्यात् । यदेष आकाश
आनन्दो न स्यात् । एष ह्येवानन्दयाति । यदा
ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठाव्विँन्दते । अथ सोऽभयङ्गतो
भवति । यदा ह्येवैष एतस्मिन्नु दरमन्तरङ्कुरुते । अथ
तस्य भयं भवति । तत्त्वेव भयव्विँदुषोऽमन्वानस्य । तदप्येष श्लोको भवति । (30)
51408
भीषाऽस्माद्वातः पवते । भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च । मृत्युर्धावति
पञ्चम इति । सैषाऽऽनन्दस्य मीमाꣳसा भवति ।
युवा स्यात्साधु युवाऽध्यायकः । आशिष्ठो दृढिष्ठो बलिष्ठः । तस्येयं पृथिवी सर्वा वित्तस्य
पूर्णा स्यात् । स एको मानुष आनन्दः । ते ये शतं
मानुषा आनन्दाः । स एको मनुष्यगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये
शतं मनुष्यगन्धर्वाणामानन्दाः । स एको
देवगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतन्देवगन्धर्वाणामानन्दाः । स एकः

पितृणाञ्चिरलोकलोकानामानन्दः । श्रोत्रियस्य
चाकामहतस्य । ते ये शतं पितृणाञ्चिरलोकलोकानामानन्दाः । स एक आजानजानान्देवानामानन्दः
। श्रोत्रियस्य चाकामहतस्य । ते ये
शतमाजानजानान्देवानामानन्दाः । स एकः कर्मदेवानान्देवानामानन्दः । ये कर्मणा देवानपियन्ति ।
श्रोत्रियस्य चाकामहतस्य । ते ये
शतङ्कर्मदेवानान्देवानामानन्दाः । स एको देवानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये
शतन्देवानामानन्दाः
। स एक इन्द्रस्यानन्दः ।
श्रोत्रियस्य चाकामहतस्य । ते ये शतमिन्द्रस्यानन्दाः । स एको बृहस्पतेरानन्दः । श्रोत्रियस्य
चाकामहतस्य । ते ये शतं बृहस्पतेरानन्दाः ।
स एकः प्रजापतेरानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं प्रजापतेरानन्दाः । स एको ब्रह्मण
आनन्दः । श्रोत्रियस्य चाकामहतस्य ।
स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः । स य एवँव्वित् । अस्माल्लोँकात्प्रेत्य
। एतमन्नमयमात्मानमुपसङ्क्रामति । एतं प्राणमयमात्मान
मुपसङ्क्रामति । एतम्मनोमयमात्मानमुपसङ्क्रामति । एतं विज्ञानमयमात्मानमुपसङ्क्रामति ।
एतमानन्दमयमात्मानमुपसङ्क्रामति ।
तदप्येष श्लोको भवति । (31)
51409
यतो वाचो निवर्तन्ते । अप्राँप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कुतश्चनेति ।
एतꣳ ह वाव न तपति ।
किमहꣳ साधु नाकरवम् । किमहं पापमकरवमिति । स य एवँव्विद्वानेते आत्मान स्पृणुते । उभे
ह्येवैष
एते आत्मान स्पृणुते । य एवव्वेद ।
इत्युपनिषत् । (32)
51400
(ब्रह्मविदिदमयमिदमेकविꣳशतिः । अन्नादन्नरसमयात् प्राणो व्यानोऽपान आकाशः पृथिवी पुच्छꣳ
षड्विꣳशतिः । प्राणं प्राणमयान्मनो यजुर्
ऋख्सामादेशोऽथर्वाङ्गिरसः पुच्छन्द्वाविꣳशतिः । यतः श्रद्धर्तꣳ सत्यय्योँगो महोँऽष्टादश
। विज्ञानं प्रियं मोदः प्रमोद आनन्दो ब्रह्म पुच्छन्द्वाविꣳशतिः ।
असन्नेवाथाष्टाविꣳशतिः । असथ्थोडश । भीषाऽस्मान्मानुषो मनुष्यगन्धर्वाणान्देवगन्धर्वाणां

पितृणाञ्चिरलोकलोकानामाजानजानाङ्कर्मदेवानाय्यँ कर्मणा
देवानामिन्द्रस्य बृहस्पतेः प्रजापतेर्ब्रह्मणस्स यश्च सङ्क्रामत्येकपञ्चाशत् । यतः कुतश्चनैतमेकादश
नव ।।9।।)
51501
भृगुर्वै वारुणिः । वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तस्मा एतत्प्रोवाच
। अन्नं प्राणञ्चक्षुः श्रोत्रं मनो वाचमिति ।
तꣳ होवाच । यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति
। तद्विजिज्ञासस्व । तद्ब्रह्मेति । स तपोऽतप्यत ।
स तपस्तप्त्वा । (33)
51502
अन्नं ब्रह्मेति व्यजानात् । अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते । अन्नेन जातानि
जीवन्ति । अन्नं प्रयन्त्यभिसँविशन्तीति ।
तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच ।
तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत ।
स तपस्तप्त्वा । (34)
51503
प्राणो ब्रह्मेति व्यजानात् । प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते । प्राणेन
जातानि जीवन्ति । प्राणं प्रयन्त्यभिसँविशन्तीति ।
तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच ।
तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत ।
स तपस्तप्त्वा । (35)
51504
मनो ब्रह्मेति व्यजानात् । मनसो ह्येव खल्विमानि भूतानि जायन्ते । मनसा जातानि
जीवन्ति । मनः प्रयन्त्यभिसँविशन्तीति ।
तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच ।
तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत ।
स तपस्तप्त्वा । (36)
51505
विज्ञानं ब्रह्मेति व्यजानात् । विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते । विज्ञानेन
जातानि जीवन्ति । विज्ञानं प्रयन्त्यभि
सँविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति

। तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति ।
स तपोऽतप्यत । स तपस्तप्त्वा । (37)
51506
आनन्दो ब्रह्मेति व्यजानात् । आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन
जातानि जीवन्ति । आनन्दं प्रयन्त्यभि
सँविशन्तीति । सैषा भार्गवी वारुणी विद्या । परमे व्योमन् प्रतिष्ठिता । य एवव्वेँद
प्रतितिष्ठति । अन्नवानन्नादो भवति । महान्भवति प्रजया
पशुभिर्ब्रह्मवर्चसेन । महान्कीर्त्या । (38)
51507
अन्नन्न निन्द्यात् । तद्व्रतम् । प्राणो वा अन्नम् । शरीरमन्नादम् । प्राणे शरीरं प्रतिष्ठितम्
। शरीरे प्राणः प्रतिष्ठितः । तदेतदन्नमन्ने
प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितव्वेँद प्रतितिष्ठति । अन्नवानन्नादो भवति
। महान्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान्कीर्त्या । (39)
51508
अन्नन्न परिचक्षीत । तद्व्रतम् । आपो वा अन्नम् । ज्योतिरन्नादम् । अप्सु ज्योतिः प्रतिष्ठितम् ।
ज्योतिष्यापः प्रतिष्ठिताः ।
तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितव्वेँद प्रतितिष्ठति । अन्नवानन्नादो
भवति । महान्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन ।
महान्कीर्त्या । (40)
51509
अन्नं बहु कुर्वीत । तद्व्रतम् । पृथिवी वा अन्नम् । आकाशोऽन्नादः । पृथिव्यामाकाशः
प्रतिष्ठितः । आकाशे पृथिवी प्रतिष्ठिता ।
तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितव्वेँद प्रतितिष्ठति । अन्नवानन्नादो
भवति । महान्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन ।
महान्कीर्त्या । (41)
51510
न कञ्चन वसतौ प्रत्याचक्षीत । तद्व्रतम् । तस्माद्यया कया च विधया बह्वन्नं प्राप्नुयात् । अराद्ध्यस्मा
अन्नमित्याचक्षते । एतद्वै
मुखतोऽन्नꣳ राद्धम् । मुखतोऽस्मा अन्नꣳ राद्ध्यते । एतद्वै मद्ध्यतोऽन्नꣳ राद्धम् । मद्ध्यतोऽस्मा
अन्नꣳ राद्ध्यते । एतद्वा अन्ततोऽन्नꣳ राद्धम् ।
अन्ततोऽस्मा अन्नꣳ राद्ध्यते । य एवव्वेँद । क्षेम इति वाचि । योगक्षेम इति प्राणापानयोः

। कर्मेति हुस्तयोः । गतिरिति पादयोः । विमुक्तिरिति
पायौ । इति मानुषीस्समाज्ञाः । अथ दैवीः । तृप्तिरिति वृष्टौ । बलमिति विद्युति । यश इति
पशुषु । ज्योतिरिति नक्षत्रेषु । प्रजातिरमृतमानन्द
इत्युपस्थे । सर्वमित्याकाशे । तत्प्रतिष्ठेत्युपासीत । प्रतिष्ठावान्भवति । तन्मह इत्युपासीत
। महान्भवति । तन्मन इत्युपासीत । मानवान्भवति ।
तन्नम इत्युपासीत । नम्यन्तेऽस्मै कामाः । तद्ब्रह्मेत्युपासीत । ब्रह्मवान्भवति । तद्ब्रह्मणः
परिमर इत्युपासीत । पर्येणं म्रियन्ते द्विषन्तस्सपत्नाः ।
परि येऽप्रिया भ्रातृव्याः । स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः । स य एवंवित्
। अस्माल्लोकात्प्रेत्य । एतमन्नमयमात्मानमुपसङ्क्रम्य ।
एतं प्राणमयमात्मानमुपसङ्क्रम्य । एतं मनोमयमात्मानमुपसङ्क्रम्य । एतं
विज्ञानमयमात्मानमुपसङ्क्रम्य । एतमानन्दमयमात्मानमुपसङ्क्रम्य ।
इमाल्लोकान्कामान्नी कामरूप्यनुसञ्चरन् । एतथ्साम गायन्नास्ते । हा (3) वु हा (3) वु हा (3) वु ।
अहमन्नमहमन्नमहमन्नम् ।
अहमन्नादो३ऽ हमन्नादो३ऽ हमन्नादः । अह श्लोककृदह श्लोककृदह श्लोककृत्
। अहमस्मि प्रथमजा ऋता (3) स्य । पूर्वन्देवेभ्यो
अमृतस्य ना (3) भाइ । यो मा ददाति स इदेवमा (3) वाः । अहमन्नमन्नमदन्तमा (3) द्मि ।
अहंविश्वं भुवनमभ्यभवाम् ।
सुवर्न ज्योतीः । य एवंवेद । इत्युपनिषत् । (42)
51500
(भृगुस्तस्मै यतो विशन्ति तद्विजिज्ञासस्व तत्रयोदशान्नं प्राणो मनो विज्ञानमिति
विज्ञाय तन्तपसा द्वादश द्वादशानन्द इति सैषा दशान्न
निन्द्यात्प्राणश्शरीरमन्नन्न परिचक्षीतापो ज्योतिरन्नं बहु कुर्वीत पृथिव्याकाश
एकादशशैकादश न कञ्चनैकषष्टिर्दश ।।10।)
50000
शन्नश्शीक्षाः सह नौ यश्छन्दसां भूः स यः पृथिव्योमित्यृतञ्चाहंवेदमनूच्य शन्नस्सह नाववतु
ब्रह्मविद्भृगुः पञ्चदश ।। 15 ।।
शन्नो मह इति ये तत्र भीषाऽस्मादन्नं बहु कुर्वीत द्विचत्वारिंशत् ।। 42 ।।
शन्न इत्युपनिषत् ।। ओं शान्तिश्शान्तिश्शान्तिः ।।
हरिः ओम् । श्रीकृष्णार्पणमस्तु ।। तैत्तिरीयारण्यके पञ्चमप्रश्नः समाप्तः ।

60000
तैत्तिरीयारण्यके षष्ठप्रश्नप्रारम्भः । तैत्तिरीयोपनिषत् (- महानारायणोपनिषत्)
60101
अंभ॑स्यपा॒रे भुव॑नस्य॒ मद्ध्ये॒ नाक॑स्य पृ॒ष्ठे म॑ह॒तो मही॑यान् । शु॒क्रेण॒ ज्योती॑ꣳषि
सम॒नु॒प्रवि॑ष्टः प्र॒जाप॑तिश्चरति॒ गर्भे॑ अ॒न्तः । यस्मि॑न्नि॒दꣳ
सञ्च॒ विचैति॒ सर्व॒य्यँस्मि॑न्दे॒वा अधि॒ विश्वे॑ निषे॒दुः । तदे॒व भू॒तन्तदु॒ भव्य॑मा इ॒दन्तद॒क्षरे॑
पर॒मे व्यो॑मन्न् । येना॑वृत॒ङ्खञ्च॒ दिव॑ं म॒हीञ्च॒ येना॑दि॒त्यस्तप॑ति॒
तेज॑सा॒ भ्राज॑सा च । यम॒न्तस्स॑मु॒द्रे क॒वयो॒ वय॑न्ति॒ यद॒क्षरे॑ पर॒मे प्र॒जाः । यत॑ः
प्रसू॒ता ज॒गत॑ः प्रसू॒ती तोये॑न जी॒वान्व्यस॑सर्ज॒ भूम्या॑म् ।
यदोष॑धीभिः पु॒रुषा॑न्प॒शूꣳश्च॒ विवे॑श भू॒तानि॑ चराच॒राणि॑ । अत॑ः पर॒न्नान्य॒दणी॑यसꣳ हि॒
परा॑त्पर॒य्यँन्मह॑तो म॒हान्त॑म् । यदे॑कम॒व्यक्त॒मन॑न्तरूप॒व्विश्व॑ं
पु॒राणन्तम॑सः॒ पर॑स्तात् । (1)
60102
तदे॒वर्तन्तदु॑ स॒त्यमा॑हु॒स्तदे॒व ब्रह्म॑ पर॒मङ्क॑वी॒नाम् । इ॒ष्टापू॒र्तं ब॑हु॒धा जा॒तञ्जाय॑मान॒व्वि॒श्वं
बि॑भर्ति॒ भुव॑नस्य॒ नाभि॑ः । तदे॒वाग्निस्तद्वायु
स्तथ्सूर्य॒स्तदु॑ च॒न्द्रमा॑ः । तदे॒व शु॒क्रम॒मृत॒न्तद्ब्रह्म॒ तदाप॒स्स प्र॒जाप॑तिः । सर्वे॑
निमे॒षा ज॒ज्ञिरे॑ वि॒द्युत॒ः पुरु॑षा॒दधि॑ । क॒ला मु॑हू॒र्ताः काष्ठा॑श्चाहोरा॒त्राश्च॑
सर्व॒शः । अ॒र्द्धमा॒सा मासा॑ ऋ॒तव॑स्सव्वँ॒थ्स॒रश्च॑ कल्पताम् । स आप॑ः प्रदु॒घे उ॒भे इ॒मे
अ॒न्तरि॑क्ष॒मथो॒ सुव॑ः । नैन॑मू॒र्ध्वन्न ति॒र्यञ्च॒न्न मद्ध्ये॒ परि॑जग्रभत् ।
न तस्ये॑शे॒ कश्च॒न तस्य॑ नाम म॒हद्यश॑ः । (2)
60103
न स॒न्दृशे॑ तिष्ठति॒ रूप॑मस्य॒ न चक्षु॑षा पश्यति॒ कश्च॒नैन॑म् । हृ॒दा म॑नी॒षा मन॑सा॒ऽभिक्लृ॑प्तो॒
य ए॑नव्वि॒दुरमृ॑ता॒स्ते भ॑वन्ति ।
अ॒द्भ्यस्संभू॑तो हिरण्यग॒र्भ इत्य॒ष्टौ । ए॒ष हि दे॒वः प्र॒दिशोनु॒ सर्वा॒ः पूर्वो॑ हि जा॒तस्स
उ॒ गर्भे॑ अ॒न्तः । स वि॒जाय॑मानस्स जनि॒ष्यमा॑णः प्र॒त्यङ्मु॒खा॑स्तिष्ठति
वि॒श्वतो॑मुखः । वि॒श्वत॑श्चक्षुरु॒त वि॒श्वतो॑मुखो वि॒श्वतो॑हस्त उ॒त वि॒श्वत॑स्पात् । सं बा॒हुभ्या॒न्नम॑ति॒
सं पत॑त्रै॒र्द्यावा॑पृथि॒वी ज॒नय॑न्दे॒व एक॑ः ।
वे॒नस्तत्पश्य॒न्विश्वा॒ भुव॑नानि वि॒द्वान् यत्र॒ विश्व॒ं भव॒त्येक॑नीळम् । यस्मि॑न्नि॒दꣳ सञ्च॒
विचैक॒ꣳ॒ स ओत॒ः प्रोत॑श्च वि॒भुः प्र॒जासु॑ । प्र तद्वो॑चे अ॒मृत॒न्नु
वि॒द्वान्ग॑न्ध॒र्वो नाम॒ निहि॑त॒ङ्गुहा॑सु । (3)
60104

त्रीणि॑ प॒दा निहि॑ता॒ गुहा॑सु॒ यस्तद्वेद॑ सवि॒तुः पि॒ताऽस॑त् । स नो॒ बन्धु॑र्जनि॒ता स वि॑धा॒ता
धामा॑नि॒ वेद॒ भुव॑नानि॒ विश्वा᳚ । यत्र॑ दे॒वा
अ॒मृत॑मानशा॒नास्तृ॒तीये॒ धामा᳚न्य॒भ्यैर॑यन्त । परि॒ द्यावा॑पृथि॒वी य॑न्ति स॒द्यः परि॑ लो॒कान्
परि॒ दिशः॒ परि॒ सुवः॑ । ऋ॒तस्य॒ तन्तुँ॑व्वित॑तँव्वि॒चृत्य॒
तद॑पश्य॒त्तद॑भवत् प्र॒जासु॑ । प॒रीत्य॑ लो॒कान्प॒रीत्य॑ भू॒तानि॑ प॒रीत्य॒ सर्वाः᳚ प्र॒दिशो॒
दिश॑श्च । प्र॒जाप॑तिः प्रथम॒जा ऋ॒तस्या॒त्मना॒ऽऽत्मान॑म॒भिसं॑बभूव ।
सद॑स॒स्पति॒मद्भु॑तं प्रि॒यमिन्द्र॑स्य॒ काम्य᳚म् । सनिं॑ मे॒धाम॑यासिषम् । उद्दी᳚प्यस्व
जातवेदोऽप॒घ्नन्निर्ऋ॑तिं॒ मम॑ । (4)
60105
प॒शूꣳश्च॒ मह्य॒माव॑ह॒ जीव॑नञ्च॒ दिशो॑ दिश । मा नो॑ हिꣳसीज्जातवेदो॒ गामश्वं॒ पुरु॑ष॒ञ्जग॑त्
। अबि॑भ्र॒दग्न॒ आग॑हि श्रि॒या मा॒ परि॑पातय ।
पुरु॑षस्य विद्म सहस्रा॒क्षस्य॑ महादे॒वस्य॑ धीमहि । तन्नो॑ रुद्रः प्रचो॒दया᳚त् । तत्पुरु॑षाय
वि॒द्महे॑ महादे॒वाय॑ धीमहि । तन्नो॑ रुद्रः प्रचो॒दया᳚त् । तत्पुरु॑षाय
वि॒द्महे॑ वक्रतु॒ण्डाय॑ धीमहि । तन्नो॑ दन्तिः प्रचो॒दया᳚त् । तत्पुरु॑षाय वि॒द्महे॑ सुवर्णप॒क्षाय॑ धीमहि । (5)
60106
तन्नो॑ गरुडः प्रचो॒दया᳚त् । का॒त्या॒य॒नाय॑ वि॒द्महे॑ कन्यकु॒मारि॑ धीमहि । तन्नो॑ दुर्गिः
प्रचो॒दया᳚त् । ना॒रा॒य॒णाय॑ वि॒द्महे॑ वासुदे॒वाय॑
धीमहि । तन्नो॑ विष्णुः प्रचो॒दया᳚त् । स॒ह॒स्र॒पर॑मा दे॒वी॒ श॒तमू॑ला श॒ताङ्कु॑रा । सर्वꣳ॑
हरतु॑ मे पा॒प॒न्दू॒र्वा दु॑स्स्वप्न॒नाशि॑नी । अश्व॑क्रा॒न्ते र॑थक्रा॒न्ते॒
वि॒ष्णुक्रा᳚न्ते व॒सुन्ध॑रा । शिरसा॑ धारि॑ता दे॒वी॒ र॒क्ष॒स्व मां᳚ पदे॒ पदे । उ॒द्धृता॑सि व॑राहे॒ण॒ कृ॒ष्णे॒न
श॑तबा॒हुना । (6)
60107
भूमि॑र्धे॒नुर्ध॑रणी लो॑कधा॒रिणी । मृ॒त्तिके॑ हन॑ मे पा॒पय्यँ᳚न्म॒या दु॑ष्कृत॒ङ्कृतम् । त्वया॑
ह॒तेन॑ पापे॒न॒ जी॒वा॒मि श॑रदश्श॒तम् । मृ॒त्तिके॑ देहि॑
मे पु॒ष्टिन्त्व॒यि स॑र्वं॑ प्र॒तिष्ठि॑तम् । ग॒न्ध॒द्वा॒रान्दु॑राध॒र्षा॒न्नि॒त्यपु॑ष्टाङ्क॒रीषिणी᳚म्
। ई॒श्व॒रीꣳ॑ सर्व॑भू॒ता॒ना॒त्वामि॒होप॑ह्वये॒ श्रियम् । हिर॑ण्यश्रृ॒ङ्ग॒व्वँरु॑णं॒ प्रप॑द्ये
ती॒र्थं मे देहि॒ याचि॑तः । य॒न्मया॑ भु॒क्तम॒साधू॑नां पा॒पेभ्य॑श्च प्र॒तिग्र॑हः । यन्मे॒
मन॑सा वा॒चा॒ क॒र्म॒णा वा दु॑ष्कृत॒ङ्कृतम् । तन्न॒ इन्द्रो॒ वरु॑णो॒
बृह॒स्पति॑स्सवि॒ता च॑ पुनन्तु॒ पुनः॑ पुनः । (7)
60108
सु॒मि॒त्रा न॒ आप॒ ओष॑धयस्सन्तु दु॒र्मि॒त्रास्तस्मै॑ भूयासु॒र्यो᳚ऽस्मान्द्वेष्टि॒ यञ्च॑ व॒यन्द्वि॒ष्मः

। नमो॒ऽग्नये॑ऽफ्सु॒मते॒ नम॒ इन्द्रा॑य॒ नमो॒ वरु॑णाय॒
नमो वारुण्यै॑ नमो॒ऽद्भ्यः । यद॒पाङ्क्रूरय्यँद॑मे॒द्ध्यय्यँद॑शा॒न्तन्तद॑प॑गच्छतात् । अ॒त्या॒श॒नाद॑तीपा॒ना॒द्यच्च
उ॒ग्रात् प्र॑ति॒ग्रहा॑त् । तन्मे॒ वरु॑णो रा॒जा
पा॒णिना॑ ह्यव॒मर्॒शतु । सो॑ऽहम॑पा॒पो वि॒रजो॒ निर्मु॒क्तो मु॑क्तकि॒ल्बिषः । नाक॑स्य पृ॒ष्ठमारु॑ह्य॒
गच्छे॒द्ब्रह्म॑सलो॒कताम् । इ॒मं मे॑ गङ्गे॑ यमुने सरस्वति॒
शुतु॑द्रि॒ स्तोम॑ꣳ सचता॒ परु॒ष्णिया । अ॒सि॒क्नि॒या म॑रुद्वृधे वि॒तस्त॒याऽऽर्जी॑कीये श्रुणु॒ह्या
सु॒षोम॑या । ऋ॒तञ्च॑ स॒त्यञ्चा॒भी॑द्धा॒त्तप॒सोऽद्ध्य॑जायत । (8)
60109
तत॒ो रात्रि॑रजायत॒ तत॑स्समु॒द्रो अ॑र्ण॒वः । स॒मु॒द्राद॑र्ण॒वादधि॑ सव्वँथ्स॒रो अ॑जायत ।
अ॒हो॒रा॒त्राणि॑ वि॒दध॒द्विश्व॑स्य मिष॒तो व॒शी ।
सू॒र्या॒च॒न्द्रम॑सौ धा॒ता य॑थापू॒र्वम॑कल्पयत् । दिव॑ञ्च पृथि॒वीञ्चा॒न्तरि॑क्ष॒मथो॒ सुव॑ः
। यत्पृ॑थि॒व्याꣳ रज॑स्व॒ मान्तरि॑क्षे वि॒रोद॑सी । इ॒माꣳस्तदा॒पो व॑रुणः
पु॑नात्व॒घमर्॒षणः । ए॒ष भू॒तस्य॑ भ॒व्ये भुव॑नस्य गो॒प्ता । ए॒ष पु॒ण्यकृ॑तां॒ल्लो॒का॒ने॒ष
मृ॒त्योर्हि॑र॒ण्मय॑म् । द्यावा॑पृथि॒व्योर्हि॑र॒ण्मय॒ꣳ सश्रि॑त॒ꣳ सुव॑ः । (9)
60110
स न॒स्सुव॒स्सꣳशि॑शाधि । आर्द्रञ्ज्वल॑ति॒ ज्योति॑र॒हम॑स्मि । ज्योति॒र्ज्वल॑ति॒ ब्रह्मा॒हम॑स्मि
। यो॑ऽहम॑स्मि॒ ब्रह्मा॒हम॑स्मि । अ॒हमे॒वाहंमाञ्जु॑होमि॒
स्वाहा॑ । अ॒का॒र्य॒का॒र्य॑वकी॒र्णी स्ते॒नो भ्रू॑ण॒हा गु॑रुत॒ल्पगः । वरु॑णो॒ऽपाम॑घमर्॒षणस्तस्मा॑त्पा॒पात्
प्रमु॑च्यते । र॒जो भूमि॑स्त्व॒माꣳ रोद॑यस्व॒
प्रव॑दन्ति॒ धीरा॑ः । पु॒नन्तु॒ ऋष॑यः पु॒नन्तु॒ वस॑वः पु॒नातु॒ वरु॑णः पु॒नात्व॒घमर्॒षणः
। आक्रा॑न्थ्समु॒द्रः प्र॑थ॒मे विध॑र्मञ्ज॒नय॑न्प्र॒जा भुव॑नस्य॒ राजा॑ । (10)
60111
वृषा॑ प॒वित्रे॒ अधि॒ सानो॒ अव्ये॑ बृ॒हथ्सोमो॑ वावृधे सु॒वा॒न इन्दु॑ः । जा॒तवे॑दसे सुनवाम॒
सोम॑मरातीय॒तो निद॑हाति॒ वेद॑ः । स न॑ः पर्॒षदति॑
दु॒र्गाणि॒ विश्वा॑ ना॒वेव॒ सिन्धु॑न्दुरि॒ताऽत्य॒ग्निः । ताम॒ग्निव॑र्णा॒न्तप॑सा ज्वल॒न्तीव्वैँ॑रोच॒नीङ्क॑र्मफ॒लेषु॒
जुष्टा॑म् । दु॒र्गान्दे॒वीꣳ शर॑णम॒हं प्रप॑द्ये सु॒तर॑सितरसे॒
नम॑ः । अग्ने॒ त्वं पा॑रया॒ नव्यो॑ अ॒स्मान्थ्स्व॒स्तिभि॒रति॑ दु॒र्गाणि॒ विश्वा॑ । पूश्च॑
पृ॒थ्वी ब॑हु॒ला न॑ उ॒र्वी भवा॑ तो॒काय॒ तन॑याय॒ शँय्योः । विश्वा॑नि नो
दु॒र्गहा॑ जातवेद॒स्सिन्धु॒न्न ना॒वा दु॑रि॒ताति॑ पर्॒षि । अग्ने॑ अत्रि॒वन्मन॑सा गृणा॒नो॑ऽस्माकं॑
बोद्ध्यवि॒ता त॒नूना॑म् । पृत॒ना॒जित॒ꣳ सह॑मानमु॒ग्रिमु॒ग्रꣳ हु॑वेम

प॒रमाथ्स॒धस्थाँ॑त् । स नः॑ पर्॒षदति॑ दु॒र्गाणि॒ विश्वा॑ क्षा॒मद्दे॒वो अति॑ दुरि॒ताऽत्य॒ग्निः

। प्र॒त्नोषि॑ क॒मीड्यो॑ अध्व॒रेषु॑ स॒नाच्च॒ होता॒ नव्य॑श्च॒ सत्सि॑ ।

स्वाञ्चाँ॑ग्ने त॒नुवं॑ पि॒प्रय॑स्वा॒स्मभ्यं॑ञ्च॒ सौभ॑ग॒माय॑जस्व ।। (11)

60100

पर॑स्ता॒द्यश॒ो गुहा॑सु॒ मम॑ सुवर्णप॒क्षाय॑ धीमहि शतब॒ाहुना पुन॑ः पुनरजायत॒ सुव॒ो राजा॑ स॒धस्थ॒ात्त्रीणि॑

च ।1।

60201

भूर॒ग्नये॑ पृथि॒व्यै स्वाह॒ा भुवो॑ व॒ायवे॒ऽन्तरि॑क्षाय॒ स्वाह॒ा सुव॑रादि॒त्याय॑ दि॒वे

स्वाह॒ा भूर्भुव॒स्सुव॑श्च॒न्द्रम॑से दि॒ग्भ्यस्स्वाह॒ा नमो॑

दे॒वेभ्य॑स्स्व॒धा पि॒तृभ्य॒ो भूर्भुव॒स्सुव॒रोम् । (12)

60200

- ।2।

60301

भूरन्न॑म॒ग्नये॑ पृथि॒व्यै स्वाह॒ा भुवोऽन्न॑व्वाँ॒यवे॒ऽन्तरि॑क्षाय॒ स्वाह॒ा सुव॒रन्न॑मादि॒त्याय॑

दि॒वे स्वाह॒ा भूर्भुव॒स्सुव॒रन्न॑ञ्च॒न्द्रम॑से दि॒ग्भ्यस्वाह॒ा

नमो॑ दे॒वेभ्य॑स्स्व॒धा पि॒तृभ्य॒ो भूर्भुव॒स्सुव॒रन्न॒मोम् । (13)

60300

- ।3।

60401

भूर॒ग्नये॑ च पृथि॒व्यै च॑ मह॒ते च॒ स्वाह॒ा भुवो॑ व॒ायवे॑ चा॒न्तरि॑क्षाय च मह॒ते च॒ स्वाह॒ा

सुव॑रादि॒त्याय॑ च दि॒वे च॑ मह॒ते च॒ स्वाह॒ा

भूर्भुव॒स्सुव॑श्च॒न्द्रम॑से च॒ नक्ष॑त्रेभ्यश्च॒ दि॒ग्भ्यश्च॑ मह॒ते च॒ स्वाह॒ा नमो॑ दे॒वेभ्य॑स्स्व॒धा

पि॒तृभ्य॒ो भूर्भुव॒स्सुव॒र्मह॒रोम् । (14)

60400

- ।4।

60501

पाहि नो अग्न एन॑से स्व॒ाहा । पाहि नो विश्ववेद॑से स्व॒ाहा । यज्ञं पाहि विभाव॑सो स्व॒ाहा । सर्वं॑ पाहि

शतक्र॑तो स्व॒ाहा । (15)

60500

- ।5।

60601

यश्छन्द॑सामृष॒भो वि॒श्वरू॑प॒श्छन्दो॒॑भ्य॒श्छन्दा॒ꣳस्यावि॒वेश॑ । सताꣳ शिक्यः पुरोवाचो॑पनि॒षदिन्द्रो॒॑

ज्येष्ठ इन्द्रियाय ऋषिभ्यो नमोदेवेभ्यस्स्वधा
पितृभ्यो भूर्भुवस्सुवरोम् । (16)
60600
- ।6।
60701
नमो ब्रह्मणे धारणं मे अस्त्वनिराकरणन्धारयिता भूयासङ्कर्णयोश्श्रुतं मा च्योढ्वं ममामुष्य ओम् ।
(17)
60700
- ।7।
60801
ऋतन्तपस्सत्यन्तपः श्रुतन्तपश्शान्तन्तपो दानन्तपो यज्ञस्तपो भूर्भुवस्सुवर्ब्रह्मैतदुपास्स्यैतत्तपः । (18)
60800
- ।8।
60901
यथा वृक्षस्य संपुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्य कर्मणो दूराद्गन्धो वाति यथाऽसिधाराङ्कर्ते
ऽवहितामवक्रामेद्यद्युवे युवे ह वा विह्वयिष्यामि कर्तं पतिष्यामीत्येवममृतादात्मानञ्जुगुप्सेत् । (19)
60900
- ।9।
61001
अणोरणीयान्महतो महीयानात्मा गुहायान्निहितोऽस्य जन्तोः । तमक्रतुं पश्यति वीतशोको धातुः
प्रसादान्महिमानमीशम् ।
सप्त प्राणाः प्रभवन्ति तस्मात्सप्तार्चिषस्समिधस्सप्त जिह्वाः । सप्त इमे लोका
येषु चरन्ति प्राणा गुहाशयान्निहितास्सप्तसप्त । अतस्समुद्रा गिरयश्च
सर्वेऽस्मात्स्यन्दन्ते सिन्धवस्सर्वरूपाः । अतश्च विश्वा ओषधयो रसाश्च येनैष
भूतस्तिष्ठत्यन्तरात्मा । ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां
महिषो मृगाणाम् । श्येनो गृद्ध्राणाꣳ स्वधितिर्वनानाꣳ सोमः पवित्रमत्येति
रेभन्न् । अजामेकाल्लोहितशुक्लकृष्णां बह्वीं प्रजाञ्जनयन्तीꣳ सरूपाम् ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः । (20)
61002
हꣳसश्शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा
गोजा ऋतजा अद्रिजा ऋतं बृहत् ।
यस्माज्जाता न परा नैव किञ्चनास य आविवेश भुवनानि विश्वा । प्रजापतिः प्रजया
सँविदानस्त्रीणि ज्योतीꣳषि सचते स षोडशी । विधर्तारꣳ

हवामहे वसोः कुविद्धनाति नः । सवितारंनृचक्षसम् । अद्या नो देव सवितः प्रजावथ्सावीस्सौभगम्
। परा दुष्वप्नियः सुव । विश्वानि देव
सवितर्दुरितानि परा सुव । यद्भद्रन्तन्म आ सुव । (21)
61003
मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माद्धीर्नस्सन्त्वोषधीः । मधु नक्तमुतोषसि
मधुमत्पार्थिवः रजः । मधु द्यौरस्तु नः
पिता । मधुमान्नो वनस्पतिर्मधुमाः अस्तु सूर्यः । माद्धीर्गावो भवन्तु नः । घृतं
मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतमुवस्य धाम । अनुष्वधमावह
मादयस्व स्वाहाकृतवृँषभ वक्षि हव्यम् । समुद्रादूर्मिमधुमाः उदारदुपाःशुना
सममृतत्वमानट् । घृतस्य नाम गुह्यय्यँदस्ति जिह्वा देवानाममृतस्य
नाभिः । (22)
61004
वयन्नाम प्रब्रवामा घृतेनास्मिन् यज्ञे धारयामा नमोभिः । उप ब्रह्माशृणवच्छस्यमानञ्चतुश्शृङ्गोवमीद्गौर
एतत् । चत्वारि शृङ्गा त्रयो
अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो
मर्त्याः आविवेश । त्रिधा हितं पणिभिर्गुह्यमानङ्गवि देवासो
घृतमन्वविन्दन् । इन्द्र एकः सूर्य एकञ्जजान वेनादेक स्वधया निष्टतक्षुः ।
यो देवानां प्रथमं पुरस्ताद्विश्वाधिको रुद्रो महर्षिः । हिरण्यगर्भं पश्यत
जायमानः स नो देवश्शुभया स्मृत्या सय्युँनक्तु । यस्मात्परन्नापरमस्ति किञ्चिद्यस्मान्नाणीयो
न ज्यायोऽस्ति कश्चित् । वृक्ष इव स्तब्धो दिवि
तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् । (23)
61004
न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः । परेण नाकन्निहितङ्गुहायाव्विभ्राजते
यद्यतयो विशन्ति । वेदान्तविज्ञान-
सुनिश्चितार्थास्सन्न्यासयोगाद्यतयश्शुद्धसत्वाः । ते ब्रह्मलोके तु परान्तकाले
परामृतात्परिमुच्यन्ति सर्वे । दह्रव्विपाप्मं परवेश्मभूतय्यँत्पुण्डरीकं
पुरमद्ध्यसस्थम् । तत्रापि दह्रङ्गगनव्विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्
। यद्वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः । तस्य प्रकृतिलीनस्य
यः परस्स महेश्वरः । (24)
61000

अजोन्यस्सुव नाभिस्सर्वमुष्टौ च ।।10।
61101
सहस्रशीर्षन्देवव्विश्वाक्षव्विश्वशंभुवम् । विश्वन्नारायणन्देवमक्षरं
परमं प्रभुम् । विश्वतः परमन्नित्यव्विश्वन्नारायणꣳ हरिम् ।
विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति । पतिव्विश्वस्यात्मेश्वरꣳ शाश्वतꣳ शिवमच्युतम्
। नारायणं महाज्ञेयव्विश्वात्मानं परायणम् । नारायणपरं
ब्रह्म तत्वन्नारायणः परः । नारायणपरो ज्योतिरात्मा नारायणः परः । यच्च
किञ्चिज्जगत्यस्मिन्दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तथ्सर्वव्याँप्य
नारायणस्स्थितः । (25)
61102
अनन्तमव्ययङ्कविꣳ समुद्रेन्तव्विश्वशंभुवम् । पद्मकोशप्रतीकाशꣳ हृदयञ्चाप्यधोमुखम्
। अधो निष्ट्या वितस्त्यान्तु नाभ्यामुपरि
तिष्ठति । हृदयन्तद्विजानीयाद्विश्वस्यायतनं महत् । सन्ततꣳ सिराभिस्तु लंबत्याकोशसन्निभम्
। तस्यान्ते सुषिरꣳ सूक्ष्मतस्मिन्थ्सर्वं प्रतिष्ठितम् ।
तस्य मद्ध्ये महानग्निर्विश्वार्चिर्विश्वतोमुखः । सोऽग्रभुग्विभजन्तिष्ठन्नाहारमजरः
कविः । सन्तापयति स्वन्देहमापादतलमस्तकम् । तस्य मद्ध्ये
वह्निशिखा अणीयोर्द्ध्वा व्यवस्थितः । नीलतोयदमद्ध्यस्था विद्युल्लेखेव भास्वरा
। नीवारशूकवत्तन्वी पीताभास्यात्तनूपमा । तस्याश्शिखाया मद्ध्ये
परमात्मा व्यवस्थितः । स ब्रह्मा स शिवस्सेन्द्रस्सोऽक्षरः परमस्स्वराट् ।। (26)
61100
नारायणस्स्थितो व्यवस्थितश्चत्वारि च ।। 11 ।।
61201
ऋतꣳ सत्यं परं ब्रह्म पुरुषङ्कृष्णपिङ्गलम् । ऊर्द्ध्वरेतव्विरूपाक्षव्विश्वरूपाय वै नमः ।। 12 ।।
61301
आदित्यो वा एष एतन्मण्डलन्तपति तत्र ता ऋचस्तदृचां मण्डलꣳ स ऋचाल्लोकोऽथ
य एष एतस्मिन्मण्डलेऽर्चिर्दीप्यते तानि सामानि
स साम्नाम्मण्डलꣳ स साम्नाल्लोकोऽथ य एष एतस्मिन्मण्डलेऽर्चिषि पुरुषस्तानि
यजूꣳषि स यजुषां मण्डलꣳ स यजुषाल्लोकस्सैषा त्रय्येव
विद्या तपति य एषोन्तरादित्ये हिरण्मयः पुरुषः । (28)
61300
-।13।
61401

आ॒दि॒त्यो वै तेज॒ ओजो॒ बल॒य्यँश॒श्चक्षु॒श्श्रोत्र॑मा॒त्मा मनो॑ म॒न्युर्मनु॑र्मृ॒त्युस्स॒त्यो
मि॒त्रो वा॒युरा॑का॒शः प्रा॒णो लो॑कपा॒लः कः किङ्क्न्तथ्स॒त्य-
मन्न॒मायु॑र॒मृतो॑ जी॒वो विश्व॑ः कत॒मस्स्व॑यं॒भुः प्र॒जाप॑तिस्सव्वँथ्स॒र इति॑ सव्वँथ्स॒रो॑ऽसावा॑दि॒त्यो
य ए॒ष पु॑रु॑ष ए॒ष भू॒ताना॒मधि॑पतिर्ब्र॒ह्म॑ण॒स्सायु॑ज्यꣳ
स॒लोकता॑माप्नोत्ये॒तासा॑मे॒व दे॒वता॑ना॒ꣳ सायु॑ज्यꣳ सा॒र्ष्टिता॑ꣳ समानलो॒कता॑माप्नोति॒ य ए॒वव्वेँदे॑त्युप॒निषत्
। (29)
61400
-।14।
61501
घृणि॒स्सूर्य॑ आदि॒त्योम॑र्चयन्ति॒ तप॑स्स॒त्यं मधु॑ क्षरन्ति॒ तद्ब्रह्म॒ तदाप॒ आपो॒ ज्योती॒रसो॒ऽमृतं॒
ब्रह्म॒ भूर्भु॑व॒स्सुव॒रोम् । (30)
61500
-।15।
61601
सर्वो॒ वै रु॒द्रस्तस्मै॑ रु॒द्राय॒ नमो॑ अस्तु । पुरु॑षो॒ वै रु॒द्रस्सन्म॒हो नमो॒ नम॑ः । विश्वं॑
भू॒तं भुव॑नञ्चि॒त्रं ब॑हु॒धा जा॒तञ्जाय॑मानञ्च॒ यत् ।
सर्वो॒ ह्ये॑ष रु॒द्रस्तस्मै॑ रु॒द्राय॒ नमो॑ अस्तु । (31)
61600
-।16।
61701
कद्रु॒द्राय॒ प्रचे॑तसे मी॒ढुष्ट॑माय॒ तव्य॑से । वो॒चेम॒ शन्त॑मꣳ हृ॒दे । सर्वो॒ ह्ये॑ष रु॒द्रस्तस्मै॑ रु॒द्राय॒ नमो॑ अस्तु
। (32)
61600
-।17।
61801
नमो हिरण्यबाहवे हिरण्यपतयेऽम्बिकापतय उमापतये॑ नमो॒ नमः । (33)
61800
-।18।
61901
यस्य॒ वैक॑ङ्कत्यग्निहोत्र॒हव॑णी भवति॒ प्रति॑ष्ठिता॒ः प्रत्ये॒वास्याहु॑तयस्तिष्ठ॒न्त्यथो॒ प्रति॑ष्ठित्यै । (34)
61900
-।19।
62001
कृ॒णु॒ष्व पाज॒ इति॒ पञ्च॑ । (35)

62000

।20।

62101

अदि॑तिर्दे॒वा ग॑न्ध॒र्वा म॑नु॒ष्याः᳚ पि॒तरोऽसु॑रा॒स्तेषाꣳ॑ सर्वभू॒तानां᳚ मा॒ता मे॒दिनी॑

मह॒ती म॒ही सा॑वि॒त्री गा॑य॒त्री जग॑त्यु॒र्वी पृ॒थ्वी ब॑हु॒ला

विश्वा॑ भू॒ता क॑त॒मा का या सा स॒त्येत्य॒मृतेति॑ वसि॒ष्ठः । (36)

62100

- ।21।

62201

आपो॒ वा इ॒दꣳ सर्व॒ँव्विश्वा॑ भू॒तान्याप॑ः प्रा॒णा वा आप॑ः प॒शव॒ आपो॒ऽमृत॒मापोऽन्न॒माप॑स्स॒म्राडापो॑

वि॒राडाप॑स्स्व॒राडाप॒श्छन्दा॒ꣳ॒स्यापो॒

ज्योती॒ꣳ॒ष्याप॑स्स॒त्यमाप॒स्सर्वा॑ दे॒वता॒ आपो॒ भूर्भुव॒स्सुव॒राप॒ ओम् । (37)

62200

- ।22।

62301

आप॑ः पुनन्तु पृथि॒वीं पृ॑थि॒वी पू॒ता पु॑नातु॒ माम् । पु॒नन्तु॒ ब्रह्म॑ण॒स्पति॒र्ब्रह्म॑पू॒ता

पु॑नातु॒ माम् । यदुच्छि॑ष्ट॒मभो᳚ज्य॒य्यँद्वा॑ दु॒श्चरि॑तं॒ मम॑ ।

सर्वं᳚ पुनन्तु॒ मामापो॑ऽस॒ताञ्च॑ प्रति॒ग्रह॒ स्वाहा᳚ । (38)

62300

।23।

62401

अग्निश्च मा मन्युश्च मन्युपतयश्च मन्यु॑कृते॒भ्यः । पापेभ्यो॑ रक्ष॒न्ताम् । यदह्ना पाप॑मका॒र्षम् । मनसा

वाचा॑ हस्ता॒भ्याम् ।

पद्भ्यामुद॑रेण शि॒श्ना । अह॒स्तद॑वलु॒म्पतु । यत्किञ्च॑ दुरि॒तं मयि॑ । इदमहं माममृ॑तयो॒नौ । सत्ये

ज्योतिषि जुहो॑मि स्वा॒हा । (39)

62400

- ।24।

62501

सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्यु॑कृते॒भ्यः । पापेभ्यो॑ रक्ष॒न्ताम् । यद्रात्रिया पाप॑मका॒र्षम् । मनसा

वाचा॑ हस्ता॒भ्याम् ।

पद्भ्यामुद॑रेण शि॒श्ना । रात्रि॒स्तद॑वलु॒म्पतु । यत्किञ्च॑ दुरि॒तं मयि॑ । इदमहं माममृ॑तयो॒नौ । सूर्ये

ज्योतिषि जुहो॑मि स्वा॒हा । (40)

62500

- ।25।
62601

आया॑तु॒ वर॑दा दे॒वी॒ अ॒क्षरं॑ ब्रह्म॒संमि॑तम् । गा॒य॒त्री॑ञ्छन्द॑सां मा॒तेदं॑ ब्र॒ह्म जु॒षस्व॑

नः । ओजो॑ऽसि॒ सहो॑ऽसि॒ बल॑मसि॒ भ्राजो॑ऽसि

दे॒वाना॒न्धाम॒ नामा॑सि॒ विश्व॑मसि वि॒श्वायु॒स्सर्व॑मसि स॒र्वायुरभिभूरोङ्गायत्रीमावा॑हया॒मि । (41)
62600

- ।26।
62701

ओं भूः । ओं भुवः॑ । ओ३ं सुवः॑ । ओं महः॑ । ओञ्जनः॑ । ओं तपः॑ । ओ३ं स॒त्यम् ।

ओन्तथ्स॑वि॒तुर्वरे॑ण्यं॒ भर्गो॑ दे॒वस्य॑ धीमहि ।

धियो॒ यो नः॑ प्रचो॒दया॑त् । ओमापो॒ ज्योती॒रसो॒ऽमृतं॒ ब्रह्म॒ भूर्भुव॒स्सुव॒रोम् । (42)
62700

- ।27।
62801

ओं भूर्भुव॒स्सुव॒र्मह॒र्जन॒स्तप॑स्स॒त्यन्तद्ब्रह्म॒ तदाप॒ आपो॒ ज्योती॒रसो॒ऽमृतं॒ ब्रह्म॒ भूर्भुव॒स्सुव॒रोम् । (43)
62800

।28।
62901

ओ॑न्तद्ब्रह्म । ओ॑न्तद्वा॒युः । ओ॑न्तदा॒त्मा । ओ॑न्तथ्सर्व॑म् । ओ॑न्तत्पु॒रोर्नमः॑ । (44)
62900

- ।29।
63001

उ॒त्तमे॑ शिख॑रे दे॒वी॒ भूम्यां॒ पर्व॑त॒मूर्ध॑नि । ब्रा॒ह्म॒णे॑भ्यो ह्यनु॑ज्ञा॒नङ्ग॒च्छ दे॑वि य॒थासु॑खम् । (45)
63000

- ।30।
63101

ओमन्तश्चरति॑ भूते॒षु॒ गुहायां॒ वि॑श्वमू॒र्तिषु । त्वय्यँ॑ज्ञस्त्वव्विँ॑ष्णुस्त्वव्वँ॑षट्का॒र॒स्त्वं॑

रुद्रस्त्वं ब्रह्मा त्वं॑ प्रजा॒पतिः॑ । (46)
63100

।31।
63201

अ॒मृ॒तो॒प॒स्तर॑णमसि । (47)
63200

- ।32।
63301

प्रा॒णे निवि॑ष्टो॒ऽमृतं॑ जुहोमि । प्रा॒णाय॒ स्वाहा᳚ । अ॒पा॒ने निवि॑ष्टो॒ऽमृतं॑ जुहोमि ।
अ॒पा॒नाय॒ स्वाहा᳚ । व्या॒ने निवि॑ष्टो॒ऽमृतं॑ जुहोमि ।
व्यानाय॒ स्वाहा᳚ । उ॒दा॒ने निवि॑ष्टो॒ऽमृतं॑ जुहोमि । उ॒दा॒नाय॒ स्वाहा᳚ । स॒मा॒ने निवि॑ष्टो॒ऽमृतं॑ जुहोमि
। स॒मा॒नाय॒ स्वाहा᳚ । ब्रह्म॑णि म आ॒त्माऽमृ॑त॒त्वाय॑ । (48)
63300
- ।33।
63401
प्रा॒णे निवि॑ष्टो॒ऽमृतं॑ जुहोमि शि॒वो मा॑ वि॒शा प्र॑दाहाय प्रा॒णाय॒ स्वाहा᳚ । अ॒पा॒ने निवि॑ष्टो॒ऽमृतं॑ जुहोमि
शि॒वो मा॑ वि॒शा प्र॑दाहायापा॒नाय॒
स्वाहा᳚ । व्या॒ने निवि॑ष्टो॒ऽमृतं॑ जुहोमि शि॒वो मा॑ वि॒शा प्र॑दाहाय व्या॒नाय॒ स्वाहा᳚ ।
उ॒दा॒ने निवि॑ष्टो॒ऽमृतं॑ जुहोमि शि॒वो मा॑ वि॒शा प्र॑दाहायोदा॒नाय॒
स्वाहा᳚ । स॒मा॒ने निवि॑ष्टो॒ऽमृतं॑ जुहोमि शि॒वो मा॑ वि॒शा प्र॑दाहाय समा॒नाय॒ स्वाहा᳚ । ब्रह्म॑णि म
आ॒त्माऽमृ॑त॒त्वाय॑ । (49)
62400
- ।34।
63501
अ॒मृ॒ता॒पि॒धा॒नम॑सि । (50)
63500
- ।35 ।
63601
श्र॒द्धायां᳚ प्रा॒णे निवि॑श्या॒मृतꣳ॑ हु॒तम्प्रा॒णमन्ने॑नाप्यायस्व । अ॒पा॒ने निवि॑श्या॒मृतꣳ॑
हु॒तम॑पा॒नमन्ने॑नाप्यायस्व । व्या॒ने निवि॑श्या॒मृतꣳ॑
हु॒तव्व्याँ॒नमन्ने॑नाप्यायस्व । उ॒दा॒ने निवि॑श्या॒मृतꣳ॑ हु॒तमु॑दा॒नमन्ने॑नाप्यायस्व । स॒मा॒ने
निवि॑श्या॒मृतꣳ॑ हु॒तꣳ स॑मा॒नमन्ने॑नाप्यायस्व । ब्रह्म॑णि म
आ॒त्माऽमृ॑त॒त्वाय॑ । (51)
63600
- ।36।
63701
प्राणानाङ्ग्रन्थिरसि रुद्रो मा॑ऽऽविशा॒न्तकस्तेनान्नेना᳚प्याय॒स्व । (52)
63700
। 37।
63801
अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठञ्च॑ समा॒श्रितः । ईशस्सर्वस्य जगतः प्रभुः प्रीणाति॑ विश्व॒भुक् । (53)

63800

- ।38।
63901

मे॒धा दे॒वी जु॒षमा॑णा न॒ आगा॑द्वि॒श्वाची॑ भ॒द्रा सु॑मन॒स्यमा॑ना । त्वया॒ जुष्टा॑ जु॒षमा॑णा

दु॒रुक्ता॑न्बृ॒हद्व॑देम वि॒दथे॑ सु॒वीराः॑ । त्वया॒ जुष्ट॑

ऋ॒षिर्भ॑वति दे॒वि त्वया॒ ब्रह्मा॑ऽऽग॒तश्री॑रु॒त त्वया॑ । त्वया॒ जुष्ट॑श्चि॒त्रव्वि॑न्दते

वसु॒ सा नो॑ जुषस्व॒ द्रवि॑णेन मेधे । (54)
63900

- ।39।
64001

मे॒धां म॒ इन्द्रो॑ ददातु मे॒धान्दे॒वी सर॑स्वती । मे॒धां मे॑ अ॒श्विनौ॑ दे॒वावाध॑त्तां पुष्क॑रस्रजा । (55)
64000

- ।40।
64101

अ॒प्स॒रासु॑ च॒ या मे॒धा ग॑न्ध॒र्वेषु॑ च॒ यन्मनः॑ । दैवी॑ मे॒धा म॑नुष्य॒जा सा मां॑ मे॒धा सु॒रभि॑र्जुषताम् ।

(56)
64100

- ।41।
64201

आ मां॑ मे॒धा सु॒रभि॑र्वि॒श्वरू॑पा हिर॑ण्यवर्णा॒ जग॑ती जग॒म्या । ऊर्ज॑स्वती॒ पय॑सा॒ पिन्व॑माना॒

सा मां॑ मे॒धा सु॒प्रती॑का जुषताम् । (57)
64200

- ।42।
64301

स॒द्योजा॒तं प्र॑पद्या॒मि स॒द्योजा॒ताय॒ वै नमः॑ । भ॒वेभ॑वे॒ नाति॑भवे भजस्व॒ मां भ॒वोद्भ॑वाय॒ नमः॑ । (58)
64300

- ।43।
64401

वा॒म॒दे॒वाय॒ नमो॑ ज्ये॒ष्ठाय॒ नमो॑ रु॒द्राय॒ नम॒ः काला॑य॒ नम॒ः कल॑विकरणाय॒ नमो॒ बल॑विकरणाय॒ नमो॒

बल॑प्रमथनाय॒

नम॒स्सर्व॑भूतदमनाय॒ नमो॑ म॒नोन्म॑नाय॒ नमः॑ । (59)
64400

- ।44।
64501

अ॒घोरे॓भ्योऽथ॒ घोरे॓भ्यो॒ घोर॒घोर॑तरेभ्यस्स॒र्वत॑श्शर्व॒ सर्वे॓भ्यो॒ नम॑स्ते अस्तु रु॒द्ररू॑पेभ्यः । (60)
64500

- ।45।
64601

तत्पुरु॑षाय वि॒द्महे॑ महादे॒वाय॑ धीमहि । तन्नो॑ रुद्रः प्रचो॒दया॓त् । (61)
64600

- ।46।
64701

ईशानस्सर्व॑विद्या॒ना॒मीश्वरस्सर्व॑भूता॒नां॒ ब्रह्माधि॑पति॒र्ब्रह्म॒णोऽधि॑पति॒र्ब्रह्मा॑ शि॒वो मे॑ अस्तु सदाशि॒वोम् ।

(62)
64700

।47।
64801

ब्रह्म॑मेतु॒ माम् । मधु॑मेतु॒ माम् । ब्रह्म॑मे॒व मधु॑मेतु॒ माम् । यास्ते॑ सोम प्र॒जाव॒थ्सोभि॒

सो अ॒हम् । दुस्स्व॑प्न॒हन्दु॑रुष्व॒हा । यास्ते॑ सोम

प्रा॒णाꣳस्ताञ्जु॑होमि । त्रिसु॑पर्ण॒मया॑चितं ब्राह्म॒णाय॑ दद्यात् । ब्र॒ह्म॒ह॒त्याव्वाँ ए॒ते

घ्नन्ति । ये ब्रा॓ह्म॒णास्त्रिसु॑पर्ण॒ं पठ॑न्ति । ते सोम॒ं प्राप्नु॑वन्ति ।

आ॒स॒ह॒स्रात्प॒ङ्क्तिं पुन॑न्ति । ओम् । (63)
64800

- ।48।
64901

ब्रह्म॑ मे॒धया॓ । मधु॑ मे॒धया॓ । ब्रह्म॑मे॒व मधु॑ मे॒धया॓ । अ॒द्या नो॑ देव सवितः प्र॒जाव॑थ्सावी॒स्सौभ॑गम्

। परा॑ दु॒ष्वप्नि॑यꣳ सुव ।

विश्वा॑नि देव सवितर्दुरि॒ताऩि॒ परा॑ सुव । यद्भ॒द्रन्तन्म॒ आ सु॑व । मधु॒ वाता॑ ऋताय॒ते मधु॑

क्षरन्ति॒ सिन्ध॑वः । माध्वी॓र्नस्स॒न्त्वोष॑धीः । मधु॒

नक्त॑मु॒तोषसि॒ मधु॑म॒त्पार्थि॑व॒ꣳ रजः॑ । मधु॒ द्यौर॑स्तु नः पि॒ता । मधु॑मान्नो॒ वन॒स्पति॒र्मधु॑माꣳ

अस्तु॒ सूर्यः॑ । माध्वी॒र्गावो॑ भवन्तु नः । य

इ॒मन्त्रिसु॑पर्ण॒मया॑चितं ब्राह्म॒णाय॑ दद्यात् । भ्रू॒ण॒ह॒त्याव्वाँ ए॒ते घ्नन्ति । ये ब्रा॓ह्म॒णास्त्रिसु॑पर्ण॒

पठ॑न्ति । ते सोम॒ं प्राप्नु॑वन्ति । आ॒स॒ह॒स्रात्प॒ङ्क्तिं पुन॑न्ति ।

ओम् । (64)
64900

।49।
65001

ब्रह्म॑ मे॒धवा᳚ । मधु॑ मे॒धवा᳚ । ब्रह्म॑मे॒व मधु॑ मे॒धवा᳚ । ब्र॒ह्मा दे॒वाना᳚ं पद॒वीः

क॑व॒ीनामृषि॒र्विप्रा॑णां महि॒षो मृ॒गाणा᳚म् । श्ये॒नो गृद्ध्रा॑णा॒ꣳ

स्वधि॑ति॒र्वना॑ना॒ꣳ सोम॑ः प॒वित्र॒मत्ये॑ति॒ रेभन्न्॑ । ह॒ꣳसश्शु॑चि॒षद्वसु॑रन्तरिक्ष॒सद्धोता॑

वेदि॒षदति॑थिर्दु॒रोण॒सत् । नृषद्व॑र॒सदृ॑त॒सद्व्यो॑म॒सद॒ब्जा

गो॒जा ऋ॑त॒जा अ॑द्रि॒जा ऋ॒तं बृ॒हत् । य इ॒मन्त्रि॒सु॑पर्ण॒मया॑चितं ब्राह्म॒णाय॑ दद्यात् ।

वी॒र॒ह॒त्याव्वाँ ए॒ते घ्न॑न्ति । ये ब्रा᳚ह्म॒णास्त्रि॒सु॑पर्ण॒ं पठ॑न्ति ।

ते सोम॒ं प्राप्नु॑वन्ति । आ॒स॒ह॒स्रात्प॒ङ्क्तिं पुन॑न्ति । ओम् । (65)
65000

- ।50।
65101

प्राणापानव्यानोदानसमाना मे॑ शु॒द्ध्य॒न्ता॒ञ्ज्योति॑र॒हव्वि॒रजा॑ विपा॒प्मा भू॑यास॒ स्वाहा᳚ । (66)
65100

।51।
65201

वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणरेतोबुद्ध्याकूतिसङ्कल्पा मे॑ शु॒द्ध्य॒न्ता॒ञ्ज्योति॑र॒हव्वि॒रजा॑ विपा॒प्मा भू॑यास॒ स्वाहा᳚ । (67)
65200

- ।52।
65301

शिरःपाणिपादपार्श्वपृष्ठोदरजङ्घशिश्नोपस्थपायवो मे॑ शु॒द्ध्य॒न्ता॒ञ्ज्योति॑र॒हव्वि॒रजा॑ विपा॒प्मा भू॑यास॒ स्वाहा᳚ । (68)
65300

- ।53।
65401

त्वक्चर्ममाꣳसरुधिरमेदोऽस्थिमज्ज्ञा मे॑ शु॒द्ध्य॒न्ता॒ञ्ज्योति॑र॒हव्वि॒रजा॑ विपा॒प्मा भू॑यास॒ स्वाहा᳚ । (69)
65400

- ।54।
65501

शब्दस्पर्शरूपरसगन्धा मे॑ शु॒द्ध्य॒न्ता॒ञ्ज्योति॑र॒हव्वि॒रजा॑ विपा॒प्मा भू॑यास॒ स्वाहा᳚ । (70)
65500

- ।55।
65601

पृथिव्यप्तेजोवाय्वाकाशा मे॑ शु॒द्ध्य॒न्ता॒ञ्ज्योति॑र॒हव्वि॒रजा॑ विपा॒प्मा भू॑यास॒ स्वाहा᳚ । (71)
65600

- ।56।
65701

अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुद्ध्यन्ताञ्ज्योतिरहव्विरजा विपाप्मा भूयास स्वाहा ।
(72)
65700

- ।57।
65801

विविंट्टि स्वाहा ।(73)
65800

- ।58।
65901

घृषोत्काय स्वाहा ।(74)
65900

- ।59।
66001

उत्तिष्ठ पुरुषा हरी लोहितपिङ्गलाक्षि देहि देहि ददापयिता मे शुद्ध्यन्ताञ्ज्योतिरहव्विरजा विपाप्मा भूयास स्वाहा । (75)
66000

।60।
66101

ओं स्वाहा । (76)
66100

- ।61।
66201

सत्यं परं परं सत्यं सत्येन न सुवर्गाल्लोकाच्च्यवन्ते कदाचन सतां हि सत्यन्तस्मात्सत्ये रमन्ते तप इति तपो नानशनात्परय्यँद्धि परन्तपस्तद्दुर्द्धर्षन्तद्दुराधर्षन्तस्मात्तपसि रमन्ते दम इति नियतं ब्रह्मचारिणस्तस्माद्दमे रमन्ते शम इत्यरण्ये मुनयस्तस्माच्छमे रमन्ते दानमिति सर्वाणि भूतानि प्रशंसन्ति दानान्नाति दुष्करन्तस्माद्दाने रमन्ते धर्म इति धर्मेण सर्वमिदं परिगृहीतन्धर्मान्नाति दुश्चरन्तस्माद्धर्मे रमन्ते प्रजन इति भूयांसस्तस्माद्भूयिष्ठाः प्रजायन्ते तस्माद्भूयिष्ठाः प्रजनने रमन्तेऽग्नय इत्याह तस्मादग्नय आधातव्या अग्निहोत्रमित्याह तस्मादग्निहोत्रे रमन्ते यज्ञ इति यज्ञो हि देवानाय्यँज्ञेन हि देवा दिवङ्गतास्तस्माद्यज्ञे रमन्ते मानसमिति विद्वांसस्तस्माद्विद्वांस

एव मानसे रमन्ते न्यास इति ब्रह्मा ब्रह्मा हि
परः परो हि ब्रह्मा तानि वा एतान्यवराणि तपाꣳसि न्यास एवात्यरेचयद्य एवव्वेँदेँत्युपनिषत् । (77)
66200
- ।62।
66301
प्राजापत्यो हारुणिस्सुपर्णेयः प्रजापतिं पितरमुपससार किं भगवन्तः परमव्वँदन्तीति
तस्मै प्रोवाच सत्येन वायुरावाति सत्येनादित्यो
रोचते दिवि सत्यव्वाँचः प्रतिष्ठा सत्ये सर्वं प्रतिष्ठितन्तस्माँथ्सत्यं परमव्वँदन्ति
तपसा देवा देवतामग्र आयन्तपसर्षयस्सुवरन्वविन्दन्तपसा
सपत्नाप्रणुदामारातीस्तपसि सर्वं प्रतिष्ठितन्तस्मात्तपः परमव्वँदन्ति दमेन
दान्ताः किल्बिषमवधून्वन्ति दमेन ब्रह्मचारिणस्सुवरगच्छन्दमो
भूतानाँन्दुराधर्षन्दमे सर्वे प्रतिष्ठितन्तस्माद्दमः परमव्वँदन्ति शमेन शान्ताश्शिवमाचरन्ति
शमेन नाकं मुनयोऽन्वविन्दञ्छमो भूतानाँन्दुराधर्षञ्छमे
सर्वं प्रतिष्ठितन्तस्माच्छमः परमव्वँदन्ति दानय्यँज्ञानाव्वँरूथन्दक्षिणा लोके
दातारꣳ सर्वभूतान्युपजीवन्ति दानेनारातीरपानुदन्त दानेन द्विषन्तो
मित्रा भवन्ति दाने सर्वं प्रतिष्ठितन्तस्माँद्दानं परमव्वँदन्ति धर्मो विश्वस्य
जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पन्ति धर्मेण पापमपनुदति धर्मे
सर्वं प्रतिष्ठितन्तस्माँद्धर्मं परमव्वँदन्ति प्रजननव्वैँ प्रतिष्ठा लोके साधु
प्रजायाँस्तन्तुन्तन्वानः पितृणामनृणो भवति तदेव तस्यानृणन्तस्माँत् प्रजननं
परमव्वँदन्त्यग्नयो वै त्रयी विद्या देवयानः पन्था गार्हपत्य ऋक्पृथिवी रथन्तरमन्वाहार्यपचनो
यजुरन्तरिक्षव्वाँमदेव्यमाहवनीयस्साम सुवर्गो लोको
बृहत्तस्मादग्नीन्परमव्वँदन्त्यग्निहोत्रꣳ सायंप्रातर्गृहाणान्निष्कृतिस्स्विष्टꣳ
सुहुतय्यँज्ञक्रतूनां प्रायणꣳ सुवर्गस्य लोकस्य ज्योतिस्तस्मादग्निहोत्रं परमव्वँदन्ति
यज्ञ इति यज्ञो हि देवानाँय्यँज्ञेन हि देवा दिवङ्गता यज्ञेनासुरानपानुदन्त यज्ञेन
द्विषन्तो मित्रा भवन्ति यज्ञे सर्वं प्रतिष्ठितन्तस्माँद्यज्ञं परमव्वँदन्ति
मानसव्वैँ प्राजापत्यं पवित्रं मानसेन मनसा साधु पश्यति मानसा ऋषयः प्रजा असृजन्त
मानसे सर्वं प्रतिष्ठितन्तस्माँन्मानसं परमव्वँदन्ति न्यास
इत्याहुर्मनीषिणो ब्रह्माणं ब्रह्मा विश्वः कतमस्स्वयंभुः प्रजापतिस्सव्वँथ्सर
इति सव्वँथ्सरोऽसावादित्यो य एष आदित्ये पुरुषस्स परमेष्ठी ब्रह्मात्मा
याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति पर्जन्येनौषधिवनस्पतयः प्रजायन्त

ओषधिवनस्पतिभिरन्नं भवत्यन्नेन प्राणाः प्राणैर्बलं बलेन

तपस्तपसा श्रद्धा श्रद्धया मेधा मेधया मनीषा मनीषया मनो मनसा शान्तिश्शान्त्या

चित्तञ्चित्तेन स्मृति स्मृत्या स्मार स्मारेण विज्ञानं

व्विज्ञानेनात्मानंव्वेदयति तस्मादन्नन्ददन्थ्सर्वाण्येतानि ददात्यन्नात् प्राणा

भवन्ति भूतानां प्राणैर्मनो मनसश्च विज्ञानंव्विज्ञानादानन्दो ब्रह्मयोनिस्स

वा एष पुरुषः पञ्चधा पञ्चात्मा येन सर्वमिदं प्रोतं पृथिवी चान्तरिक्षञ्च द्यौश्च

दिशश्चावान्तरदिशाश्च स वै सर्वमिदञ्जगत्थ्स च भूतꣳ स

भव्यञ्जिज्ञासक्लृप्त ऋतजा रयिष्ठाश्श्रद्धा सत्यो महस्वान्तमसोपरिष्टाद्ज्ञात्वा

तमेवं मनसा हृदा च भूयो न मृत्युमुपयाहि विद्वान्तस्मान्न्यास

मेषान्तपसामतिरिक्तमाहुर्वसुरण्यो विभूरसि प्राणे त्वमसि सन्धाता ब्रह्मन्त्वमसि

विश्वसृत्तेजोदास्त्वमस्यग्नेर्वर्चोदास्त्वमसि सूर्यस्य

द्युम्नोदास्त्वमसि चन्द्रमस उपयामगृहीतोऽसि ब्रह्मणे त्वा महस ओमित्यात्मानंय्युञ्जीतैतद्वै

महोपनिषदन्देवानाङ्गुह्यय्यँ एवव्वेद ब्रह्मणो

महिमानमाप्नोति तस्माद्ब्रह्मणो महिमानमित्युपनिषत् । (78)

66300

- ।63।

66401

तस्यैवव्विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिद्ध्ममुरो वेदिर्लोमानि

बर्हिर्वेदश्शिखा हृदययय्यूपः काम आज्यं मन्युः

पशुस्तपोऽग्निश्शमयिता दक्षिणा वाग्घोता प्राण उद्गाता चक्षुरद्ध्वर्युर्मनो

ब्रह्मा श्रोत्रमग्नीद्यावद्ध्रियते सा दीक्षा यदश्नाति यत्पिबति तदस्य

सोमपानय्यँद्रमते तदुपसदो यथ्सञ्चरत्युपविशत्युत्तिष्ठते च स प्रवर्ग्यो

यन्मुखन्तदाहवनीयो यदस्य विज्ञानन्तज्जुहोति यथ्सायं प्रातरत्ति तथ्समिधो

यथ्सायंप्रातर्मद्ध्यन्दिनञ्च तानि सवनानि ये अहोरात्रे ते दर्शपूर्णमासौ येऽर्द्धमासाश्च मासाश्च ते

चातुर्मास्यानि य ऋतवस्ते पशुबन्धा ये संव्वँथ्सराश्च परिवथ्सराश्च तेऽहर्गणास्सर्ववेदसव्वाँ

एतथ्सत्रय्यँन्मरणन्तदवभृथ एतद्वै जरामर्यमग्निहोत्रꣳ

सत्रय्यँ एवव्विद्वानुदगयने प्रमीयते देवानामेव महिमानङ्गत्वाऽऽदित्यस्य

सायुज्यङ्गच्छत्यथ यो दक्षिणे प्रमीयते पितृणामेव महिमानङ्गत्वा

चन्द्रमसस्सायुज्यङ्गच्छत्येतौ वै सूर्याचन्द्रमसोर्महिमानौ ब्राह्मणो विद्वानभिजयति

तस्माद्ब्रह्मणो महिमानमाप्नोति तस्माद्ब्रह्मणो महिमानमित्युपनिषत् । (79) - ।64।

60000

अंभ॑सि॒ भूर॒ग्नये॒ भूर॒न्नं॒ भूर॒ग्नये॑ च॒ पाहि नो यश्छन्द॑सा॒न्नमो॒ ब्रह्म॑ण ऋ॒तन्तपो॒

यथा॑ वृ॒क्षस्या॒णोरणी॑यान्थ्सहस्र॒शीर्॒ष॑मृतमा॑दि॒त्यो वा ए॒ष आ॑दि॒त्यो

वै तेज॒ ओजो॒ घृणि॒स्सर्वो॒ वै कद्रु॒द्राय॒ नमो हिरण्यबाहवे यस्य॒ वैक॑ङ्कती कृणु॒ष्व पाजोऽदि॑ति॒रापो॒

वा इदꣳ सर्व॒माप॑ः पुन॒न्त्वग्निश्च सूर्य॑श्चाया॒त्वों

भूरों भूर्भुव॒स्सुव॒रो॑ँतदु॒त्तम॒ ओमन्तश्चरत्य॑मृतोप॒स्तर॑णमसि प्रा॒णे निवि॑ष्टः प्रा॒णे

नि॑विष्टश्शि॒वो॑ऽमृतापिधा॒नम॑सि श्र॒द्धायां॑ प्रा॒णे निवि॑श्य॒

प्राणानामङ्गुष्ठमात्रो मे॒धा दे॒वी मे॒धां म॒ इन्द्रो॑ ददात्वप्स॒रास्वामां॑ मे॒धा स॒द्यो

वा॑मदे॒वाया॒घोरे॑भ्य॒स्तत्पु॑रु॒षायेशानो

ब्रह्म॑ मेतु॒ ब्रह्म॑ मे॒धया॒ ब्रह्म॑

मे॒धवा॒ प्राणापानवाङ्मनश्शिरःपाणित्वक्चर्मशब्दस्पर्शपृथिव्यन्नमयविवि॑ड्ढि घ॒षो॑क्तायोत्तिष्ठोꣳ

स॒त्यं पर॑ं प्राजाप॒त्यस्तस्यै॒वञ्चतु॑ष्षष्टिः ।।64।

अंभ॑सि॒ वृषा॑ हꣳ॒सस्सर्वो॒ वा आया॑तु श्र॒द्धाया॒न्तत्पुरु॑षाय॒ पृथिव्यप्तेजो नव॑सप्ततिः ।।79।

अम्भ॒सीत्यु॑प॒निष॑त् ।।

हरि॑ः ओम् । श्रीकृष्णार्पणमस्तु ।। षष्ठः प्रश्नः समाप्तः ।

70000

।। तैत्तिरीयारण्यके सप्तमः प्रश्नप्रारम्भः ।। हरिः ओम् ।।

70101

नमो॑ वा॒चे या चोदि॑ता या चानु॑दि॒ता तस्यै॑ वा॒चे नमो॒ नमो॑ वा॒चे नमो॑ वा॒चस्पत॑ये॒ नम॒ ऋषि॑भ्यो मन्त्र॒कृद्भ्यो॒ मन्त्र॑पतिभ्यो॒ मा मामृष॑यो मन्त्र॒कृतो॑ मन्त्र॒पत॑यः परा॑दु॒र्माहमृषी॑न्मन्त्र॒कृतो॑ मन्त्र॒पती॒न्परा॑दाव्वैँश्वदे॒वीव्वाँच॑मुद्यासꣳ शि॒वामद॑स्ता॒ं जुष्टा॑न्दे॒वेभ्य॒ः शर्म॑ मे॒ द्यौश्शर्म॑ पृथि॒वी शर्म॒ विश्व॑मि॒दं जग॑त् । शर्म॑ च॒न्द्रश्च॒ सूर्य॑श्च॒ शर्म॑ ब्रह्मप्रजाप॒ती । भू॒तव्वँ॑दिष्ये॒ भुव॑नव्वँदिष्ये॒ तेजो॑ वदिष्ये॒ यशो॑ वदिष्ये॒ तपो॑ वदिष्ये॒ ब्रह्म॑ वदिष्ये स॒त्यव्वँ॑दिष्ये॒ तस्मा॑ अ॒हमि॒दमु॑प॒स्तर॑ण॒मुप॑स्तृण उप॒स्तर॑णं मे प्र॒जायै॑ पश॒ूनां भू॑यादुप॒स्तर॑णम॒हं प्र॒जायै॑ पश॒ूनां भू॑यास॒ं प्राणा॑पानौ मृत्योर्मा॑ पात॒ं प्राणा॑पानौ॒ मा मा॑ हासिष्ट॒ं मधु॑ मनिष्ये॒ मधु॑ जनिष्ये॒ मधु॑ वक्ष्यामि॒ मधु॑ वदिष्यामि॒ मधु॑मतीं दे॒वेभ्यो॒ वाच॑मुद्यासꣳ शुश्रू॒षेण्या॑ं मनु॒ष्ये॑भ्य॒स्तं मा॑ दे॒वा अ॑वन्तु शो॒भायै॑ पि॒तरोऽनु॑मदन्तु । ओं शान्ति॒श्शान्ति॒श्शान्तिः॑ ।। 1 ।

70100

-। 1।

70201

यु॒ञ्जते॒ मन॑ उ॒त यु॑ञ्जते॒ धिय॑ः । विप्रा॒ विप्र॑स्य बृह॒तो वि॑प॒श्चित॑ः । वि होत्रा॑ दधे वयुना॒विदेक॒ इत् । म॒ही दे॒वस्य॑ सवि॒तुः परि॑ष्टुतिः । दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे । अ॒श्विनो॑र्बा॒हुभ्या॑म् । पू॒ष्णो हस्ता॑भ्या॒मा द॑दे । अभ्रि॑रसि॒ नारि॑रसि । अ॒द्ध्व॒र॒कृद्दे॒वेभ्य॑ः । उत्ति॑ष्ठ ब्रह्मणस्पते । (2)

70202

दे॒व॒यन्त॑स्त्वेमहे । उप॒ प्रय॑न्तु म॒रुत॑स्सु॒दान॑वः । इन्द्र॑ प्रा॒शूर्भ॑वा॒ सचा॑ । प्रैतु॒ ब्रह्म॑ण॒स्पति॑ः । प्र दे॒व्ये॑तु सू॒नृता॑ । अच्छा॑ वी॒रन्नर्य॑ं प॒ङ्क्तिरा॑धसम् । दे॒वा य॒ज्ञन्न॑यन्तु नः । देवी॑ द्यावापृथिवी॒ अनु॑ मे मꣳसाथाम् । ऋ॒द्ध्यास॑म॒द्य । म॒खस्य॒ शिर॑ः । (3)

70203

म॒खाय॑ त्वा । म॒खस्य॑ त्वा शी॒र्ष्णे । इय॒त्यग्र॑ आसीः । ऋ॒द्ध्यास॑म॒द्य । म॒खस्य॒ शिर॑ः । म॒खाय॑ त्वा । म॒खस्य॑ त्वा शी॒र्ष्णे । देवी॑र्वम्री॒रस्य भू॒तस्य॑ प्रथमजा ऋतावरीः । ऋ॒द्ध्यास॑म॒द्य । म॒खस्य॒ शिर॑ः । (4)

70204

म॒खाय॑ त्वा । म॒खस्य॑ त्वा शी॒र्ष्णे । इन्द्र॒स्यौजो॑ऽसि । ऋ॒द्ध्यास॑म॒द्य । म॒खस्य॒ शिर॑ः

। मुखाय त्वा । मुखस्य त्वा शीर्ष्णे ।
अग्निजा असि प्रजापते रेतः । ऋद्ध्यासमद्य । मुखस्य शिरः । (5)
70205
मुखाय त्वा । मुखस्य त्वा शीर्ष्णे । आयुर्धेहि प्राणन्धेहि । अपानन्धेहि व्यानन्धेहि
। चक्षुर्धेहि श्रोत्रन्धेहि । मनो धेहि
वाचन्धेहि । आत्मानन्धेहि प्रतिष्ठान्धेहि । मान्धेहि मयि धेहि । मधु त्वा मधुला करोतु । मुखस्य
शिरोऽसि । (6)
70206
यज्ञस्य पदे स्थः । गायत्रेण त्वा छन्दसा करोमि । त्रैष्टुभेन त्वा छन्दसा करोमि । जागतेन त्वा
छन्दसा करोमि । मुखस्य
रास्नाऽसि । अदितिस्ते बिलङ्गृह्णातु । पाङ्क्तेन छन्दसा । सूर्यस्य हरसा श्राय । मुखोऽसि ।। (7)
70200
पते शिर ऋतावरीर् ऋद्ध्यासमद्य मुखस्य शिरश्शिरश्शिरोऽसि नव च ।2।
(इयति देवीरिन्द्रस्यौजोऽस्यग्निजा अस्यायुर्द्धेहि प्राणं पञ्च ।। )
70301
वृष्णो अश्वस्य निष्पदसि । वरुणस्त्वा धृतव्रत आधूपयतु । मित्रावरुणयोर्ध्रुवेण
धर्मणा । अर्चिषे त्वा । शोचिषे त्वा ।
ज्योतिषे त्वा । तपसे त्वा । अभीमं महिना दिवम् । मित्रो बभूव सप्रथाः । उत श्रवसा पृथिवीम् ।
(8)
70302
मित्रस्य चर्षणीधृतः । श्रवो देवस्य सानसिम् । द्युम्नञ्चित्रश्रवस्तमम् । सिद्ध्यै
त्वा । देवस्त्वा सवितोद्वपतु । सुपाणिस्स्वङ्गुरिः ।
सुबाहुरुत शक्त्या । अपद्यमानः पृथिव्याम् । आशा दिश आ पृण । उत्तिष्ठ बृहन्भव । (9)
70303
ऊर्द्ध्वस्तिष्ठ द्ध्रुवस्त्वम् । सूर्यस्य त्वा चक्षुषाऽन्वीक्षे । ऋजवे त्वा । साधवे
त्वा । सुक्षित्यै त्वा भूत्यै त्वा ।
इदमहममुमामुष्यायणँव्विशा पशुभिर्ब्रह्मवर्चसेन पर्यूहामि । गायत्रेण त्वा
छन्दसा च्छृणद्मि । त्रैष्टुभेन त्वा छन्दसा च्छृणद्मि । जागतेन त्वा छन्दसा
च्छृणद्मि । छृणत्तु त्वा वाक् । छृणत्तु त्वोर्क् । छृणत्तु त्वा हविः । छृन्धि वाचम्
। छृन्ध्यूर्जम् । छृन्धि हविः । देव पुरश्चर सग्घ्यासन्त्वा । (10)
70300
पृथिवी भव वाख्षट्च ।3।

70401

ब्रह्म॑न् प्रव॒र्ग्ये॑ण॒ प्रच॑रिष्यामः । होत॑र्घ॒र्मम॒भिष्टु॑हि । अग्नी॑द्रौहि॑णौ पु॒रो॒डाश॒ावधि॑श्रय । प्रति॑प्रस्थात॒र्विह॑र । प्रस्तो॑त॒स्सामा॑नि गाय ।

यजु॑र्युक्त॒ꣳ साम॑भि॒राक्त॑खन्त्वा । विश्वै॑र्दे॒वैरनु॒मतं॑ म॒रुद्भि॑ः । दक्षि॑णाभि॒ः प्रत॑तं पारयि॒ष्णुम् । स्तुभो॑ वहन्तु सुमन॒स्यमा॑नम् । स नो॒ रुच॑न्धे॒ह्यहृ॑णीयमानः । भूर्भु॑व॒स्सुव॑ः । ओमिन्द्र॑वन्त॒ः प्रच॑रत । (11)

70400

अहृ॑णीयमान॒ो द्वे च॑ ।।4।

70501

ब्रह्म॒न्प्रच॑रिष्यामः । होत॑र्घ॒र्मम॒भिष्टु॑हि । य॒माय॑ त्वा म॒खाय॑ त्वा । सूर्य॒॑स्य हर॑से त्वा । प्रा॒णाय॒ स्वाहा॑ व्या॒नाय॒ स्वाहा॑ऽपा॒नाय॒ स्वाहा॑ । चक्षु॑षे॒ स्वाहा॒ श्रोत्रा॑य॒ स्वाहा॑ । मन॑से॒ स्वाहा॑ वा॒चे सर॑स्वत्यै॒ स्वाहा॑ । दक्षा॑य॒ स्वाहा॒ क्रत॑वे॒ स्वाहा॑ । ओज॑से॒ स्वाहा॒ बला॑य॒ स्वाहा॑ । दे॒वस्त्वा॑ सवि॒ता मध्वा॑ऽनक्तु । (12)

70502

पृ॒थि॒वीन्तप॑सस्त्रायस्व । अ॒र्चिर॑सि शो॒चिर॑सि॒ ज्योति॑रसि॒ तपो॑ऽसि । सꣳसी॑दस्व म॒हाꣳ अ॑सि । शोच॑स्व देव॒वीत॑मः । विधू॒मम॑ग्ने अरु॒षं मि॑येद्ध्य । सृ॒ज प्र॑शस्तदर्॒शतम् । अ॒ञ्जन्ति॒ यं प्र॒थय॑न्त॒ो न विप्रा॑ः । व॒पाव॑न्त॒न्नाग्निना॒ तप॑न्तः । पि॒तुर्न पु॒त्र उप॑सि॒ प्रेष्ठ॑ः । आ घ॒र्मो अ॒ग्निमृ॒तय॑न्नसादीत् । (13)

70503

अ॒ना॒धृ॒ष्या पु॒रस्ता॑त् । अ॒ग्नेराधि॑पत्ये । आयु॑र्मे दाः । पु॒त्रव॑ती दक्षिण॒तः । इन्द्र॒स्याधि॑पत्ये । प्र॒जां मे॑ दाः । सु॒षदा॑ प॒श्चात् । दे॒वस्य॑ सवि॒तुराधि॑पत्ये । प्रा॒णं मे॑ दाः । आश्रु॑तिरुत्तर॒तः । (14)

70504

मि॒त्रावरु॑णयो॒राधि॑पत्ये । श्रोत्रं॑ मे दाः । विधृ॑तिरु॒परि॑ष्टात् । बृह॒स्पते॒राधि॑पत्ये । ब्रह्म॑ मे दाः क्ष॒त्रं मे॑ दाः । तेजो॑ मे ध॒ा वर्चो॑ मे धाः । यशो॑ मे ध॒ास्तपो॑ मे धाः । मनो॑ मे धाः । मन॒ोरश्वा॑ऽसि॒ भूरि॑पुत्रा । विश्वा॑भ्यो मा ना॒ष्ट्राभ्य॑ः पाहि । (15)

70505

सू॒प॒सदा॑ मे भूय॒ा मा मा॑ हिꣳसीः । तपो॒ष्वग्ने॒ अन्त॑राꣳ अ॒मित्रान् । तप॒ाशꣳस॑मर॒रुष॑ः पर॑स्य । तपा॑वसो चिकित॒ानो अ॒चित्तान् ।

वि ते॑ तिष्ठन्तामु॒जरा॑ अ॒यास॑ः । चित॑स्स्थ परि॒चित॑ः । स्वाहा॑ म॒रुद्भि॑ः परि॑श्रियस्व । मा
अ॑सि । प्र॒मा अ॑सि । प्र॒ति॒मा अ॑सि । (16)
70506
स॒म्मा अ॑सि । वि॒मा अ॑सि । उ॒न्मा अ॑सि । अ॒न्तरि॑क्षस्यान्त॒र्द्धिर॑सि । दिव॒न्तप॑सस्त्रायस्व ।
आ॒भिर्गी॒र्भिर्यद॑तो॑ न ऊ॒नम् ।
आप्या॑यय हरिवो॒ वर्द्ध॑मानः । य॒दा स्तो॒तृभ्यो॒ महि॑ गो॒त्रा रु॒जासि॑ । भू॒यि॒ष्ठभा॒जो॒
अध॑ ते स्याम । शु॒क्रन्ते॑ अ॒न्यद्य॑ज॒तन्ते॑ अ॒न्यत् । (17)
70507
विषु॑रूपे॒ अह॑नी॒ द्यौरि॑वासि । विश्वा॒ हि मा॒या अव॑सि स्वधावः । भ॒द्रा ते॑ पूषन्नि॒ह रा॒तिर॑स्तु
। अर्॒ह॑न्बिभर्॒षि॒ साय॑कानि॒ धन्व॑ ।
अर्॒ह॑न्नि॒ष्कय्यँ॑ज॒तव्वि॒श्वरू॑पम् । अर्॒ह॑न्नि॒दन्द॑यसे॒ विश्व॒मब्भु॑वम् । न वा ओजी॑यो
रुद्र॒ त्वद॑स्ति । गा॒य॒त्रम॑सि । त्रैष्टु॑भमसि । जाग॑तमसि ।
मधु॒ मधु॒ मधु॑ । (18)
70500
अ॒न॒क्त्व॒सा॒दी॒दु॒त्त॒र॒तः पा॑हि प्रति॒मा अ॑सि यज॒तन्ते॑ अ॒न्यज्जाग॑तम॒स्येक॑ञ्च ।।5।।
70601
दश॒ प्राची॒र्दश॑ भासि दक्षि॒णा । दश॑ प्र॒तीची॒र्दश॑ भा॒स्युदी॑चीः । दश॒ोर्ध्वा भा॑सि सुमन॒स्यमा॑नः
। स नो॒ रुच॑न्धे॒ह्यह॑णीयमानः ।
अ॒ग्निष्ट्वा॒ वसु॑भिः पु॒रस्ता॑द्रोचयतु गाय॒त्रेण॒ छन्द॑सा । स मा॑ रुचि॒तो रो॑चय । इन्द्र॑स्त्वा
रु॒द्रैर्द॑क्षिण॒तो रो॑चयतु॒ त्रैष्टु॑भेन॒ छन्द॑सा । स मा॑ रुचि॒तो
रो॑चय । वरु॑णस्त्वादि॒त्यैः प॒श्चाद्रो॑चयतु॒ जाग॑तेन॒ छन्द॑सा । स मा॑ रुचि॒तो रो॑चय । (19)
70602
द्यु॒ता॒नस्त्वा॑ मारु॒तो म॒रुद्भि॑रुत्तर॒तो रो॑चय॒त्वानु॑ष्टुभेन॒ छन्द॑सा । स मा॑ रुचि॒तो
रो॑चय । बृह॒स्पति॑स्त्वा॒ विश्वै॑र्दे॒वैरु॒परि॑ष्टाद्रोचयतु॒
पाङ्क्ते॑न॒ छन्द॑सा । स मा॑ रुचि॒तो रो॑चय । रो॒चि॒तस्त्वन्दे॑व घर्म दे॒वेष्वसि॑ । रो॒चि॒षी॒याहं
म॑नु॒ष्ये॑षु । सम्रा॑ड्घर्म रुचि॒तस्त्वन्दे॒वेष्वायु॑ष्माꣳस्तेज॒स्वी
ब्र॑ह्मवर्च॒स्य॑सि । रु॒चि॒तो॑ऽहं म॑नु॒ष्ये॑ष्वायु॑ष्माꣳस्तेज॒स्वी ब्र॑ह्मवर्च॒सी भू॑यासम् । रुग॑सि । रुचं॒ मयि॑
धेहि । (20)
70603
मयि॒ रुक् । दश॑ पु॒रस्ता॑द्रोचसे । दश॑ दक्षि॒णा । दश॑ प्र॒त्यङ्ङ् । दशोदङ्ङ् । दश॒ोर्द्ध्वो भा॑सि
सुमन॒स्यमा॑नः ।

स न॑स्सम्राडिष॒मूर्ज॑न्धेहि । वा॒जी वा॒जिने॑ पवस्व । रो॒चि॒तो घ॒र्मो रु॑ची॒य । (21)
70600
रो॒च॒य॒ धे॒हि॒ नव॑ च । 6।
70701
अप॑श्यङ्गो॒पाम॒नि॑पद्यमानम् । आ च॒ परा॑ च प॒थिभि॒श्चर॑न्तम् । स स॒द्ध्रीची॒स्स विषू॑ची॒र्वसा॑नः । आ व॑रीवर्ति॒ भुव॑नेष्व॒न्तः ।
अत्र॑ प्रा॒वीः । मधु॒ माद्ध्वी॑भ्या॒ं मधु॒ माधू॑चीभ्याम् । अनु॑ वान्दे॒ववी॑तये । सम॒ग्निर॒ग्निना॑ गत । सन्दे॒वेन॑ सवि॒त्रा । सꣳ सूर्ये॑ण रोचते । (22)
70702
स्वाहा॒ सम॒ग्निस्तप॑सा गत । सन्दे॒वेन॑ सवि॒त्रा । सꣳ सूर्ये॑णारोचिष्ट । ध॒र्ता दि॒वो विभा॑सि॒ रज॑सः । पृ॒थि॒व्या ध॒र्ता ।
उ॒रोर॒न्तरि॑क्षस्य ध॒र्ता । ध॒र्ता दे॒वो दे॒वाना॑म् । अम॑र्त्यस्तप॒ोजाः । हृ॒दे त्वा॒ मन॑से त्वा । दि॒वे त्वा॒ सूर्या॑य त्वा । (23)
70703
ऊ॒र्ध्वमि॒मम॑ध्व॒रङ्कृ॑धि । दि॒वि दे॒वेषु॒ होत्रा॑ यच्छ । विश्वा॑सां भुवां पते । विश्व॑स्य भुवनस्पते । विश्व॑स्य तपसस्पते । विश्व॑स्य ब्रह्मणस्पते । दे॒व॒श्रूस्त्वन्दे॑व घर्म दे॒वान्पा॑हि । त॒प॒ोजाव्वाँच॑म॒स्मे निय॑च्छ दे॒वा॒युव॑म् । (24)
70704
गर्भो॑ दे॒वाना॑म् । पि॒ता म॑ती॒नाम् । पति॑ः प्र॒जाना॑म् । मति॑ः क॒वीनाम् । सन्दे॒वो दे॒वेन॑ सवि॒त्रा य॑तिष्ट । सꣳ सूर्ये॑णारुक्त ।
आ॒यु॒र्दास्त्वम॒स्मभ्य॑ङ्घर्म व॒र्चो॒दा अ॑सि । पि॒ता नो॑ऽसि पि॒ता नो॑ बोध । आ॒यु॒र्द्धास्त॑नू॒धाः प॑यो॒धाः । व॒र्चो॒दा व॑रिवो॒दा द्र॑विणो॒दाः । (25)
70705
अ॒न्त॒रि॒क्ष॒प्र उ॒रोर्वरी॑यान् । अ॒शी॒महि॑ त्वा॒ मा मा॑ हिꣳसीः । त्वम॑ग्ने गृ॒हप॑तिर्वि॒शाम॑सि । विश्वा॑सा॒ं मानु॑षीणाम् । श॒तं पू॒र्भिर्य॑विष्ठ पा॒ह्यꣳह॑सः । स॒मे॒द्धार॑ꣳ श॒तꣳ हिमाः॑ । त॒न्द्रा॒विण॑ꣳ हार्दिवा॒नम् । इ॒हैव रा॒तय॑स्सन्तु । त्वष्टी॑मती ते सपेय । सु॒रेता॒ रेतो॒ दधा॑ना । वी॒रव्विँ॑देय॒ तव॑ स॒न्दृशि॑ । माऽहꣳ रा॒यस्पोषे॑ण॒ वि यो॑षम् । (26)
70700
रो॒च॒ते॒ सूर्या॑य त्वा देवा॒युव॑न्द्रविणो॒दा दधा॑ना॒ द्वे च॑ ।।7।।
70801
दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे । अ॒श्विनो॑र्बा॒हुभ्या॑म् । पू॒ष्णो हस्ता॑भ्यामा द॑दे ।

अदि॑त्यै॒ रास्ना॑सि । इड॒ एहि॑ । अदि॑त॒ एहि॑ ।
सर॑स्व॒त्येहि॑ । अस॒ावेहि॑ । अस॒ावेहि॑ । अस॒ावेहि॑ । (27)
70802
अदि॑त्या उ॒ष्णीष॑मसि । वा॒युर॑स्यै॒डः । पू॒षा त्वो॒पाव॑सृजतु । अ॒श्विभ्यां॒ प्र दा॑पय । यस्ते॒
स्तन॑श्शश॒यो यो म॑यो॒भूः । येन॒
विश्वा॒ पुष्य॑सि॒ वार्या॑णि । यो र॑त्न॒धा व॑सु॒विद्यस्सु॒दत्रः॑ । सर॑स्वति॒ तमि॒ह धात॑वेकः
। उस्र॑ घ॒र्मꣳ॑ शिꣳ॑ष । उस्र॑ घ॒र्मं पा॑हि । (28)
70803
घ॒र्माय॑ शिꣳ॑ष । बृह॒स्पति॒स्त्वोप॑सीदतु । दान॑वस्स्थ॒ पेर॑वः । वि॒ष्व॒ग्वृत॒ो लोहि॑तेन ।
अ॒श्विभ्यां॑ पिन्वस्व । सर॑स्वत्यै पिन्वस्व ।
पू॒ष्णे पि॑न्वस्व । बृह॒स्पत॑ये पिन्वस्व । इन्द्रा॑य पिन्वस्व । इन्द्रा॑य पिन्वस्व । (29)
70804
गा॒य॒त्रो॑ऽसि । त्रैष्टु॑भोऽसि । जाग॑तमसि । स॒होर्जो भा॒गेनोप॒मेहि॑ । इन्द्रा॑श्विना॒ मधु॑नस्सार॒घस्य॑
। घ॒र्मं पा॑त वसवो॒ यज॑ता वट् ।
स्वाहा॑ त्वा॒ सूर्य॑स्य र॒श्मये॑ वृष्टि॒वन॑ये जुहोमि । मधु॑ ह॒विर॑सि । सूर्य॑स्य॒ तप॑स्तप
। द्यावा॑पृथि॒वीभ्या॑न्त्वा॒ परि॑गृह्णामि । (30)
70805
अ॒न्तरि॑क्षेण॒ त्वोप॑यच्छामि । दे॒वाना॑न्त्वा पितृ॒णामनु॑मत॒ो भर्तुꣳ॑ शकेयम् । तेजो॑ऽसि
। तेजोऽनु॒ प्रेहि॑ । दि॒वि॒स्पृङ्मा मा हिꣳसीः ।
अ॒न्त॒रि॒क्ष॒स्पृङ्मा मा॑ हिꣳसीः । पृ॒थि॒वि॒स्पृङ्मा मा॑ हिꣳसीः । सुव॑रसि॒ सुव॑र्मे यच्छ । दिव॑य्यँच्छ
दि॒वो मा॑ पाहि । (31)
70800
एहि॑ पाहि पिन्वस्व गृह्णामि॒ नव॑ च ।।8।।
70901
स॒मु॒द्राय॑ त्वा॒ वाता॑य॒ स्वाहा॑ । स॒लि॒लाय॑ त्वा॒ वाता॑य॒ स्वाहा॑ । अ॒ना॒धृ॒ष्याय॑
त्वा॒ वाता॑य॒ स्वाहा॑ । अ॒प्र॒ति॒धृ॒ष्याय॑ त्वा॒ वाता॑य॒
स्वाहा॑ । अ॒व॒स्यवे॑ त्वा॒ वाता॑य॒ स्वाहा॑ । दुव॑स्वते त्वा॒ वाता॑य॒ स्वाहा॑ । शिमि॑द्वते
त्वा॒ वाता॑य॒ स्वाहा॑ । अ॒ग्नये॑ त्वा॒ वसु॑मते॒ स्वाहा॑ । सोमा॑य त्वा
रु॒द्रव॑ते॒ स्वाहा॑ । वरु॑णाय त्वाऽऽदि॒त्यव॑ते॒ स्वाहा॑ । (32)
70902
बृह॒स्पत॑ये त्वा वि॒श्वदे॑व्यावते॒ स्वाहा॑ । स॒वि॒त्रे त्व॑र्भु॒मते॑ विभु॒मते॑ प्रभु॒मते॒
वाज॑वते॒ स्वाहा॑ । य॒माय॒ त्वाऽङ्गि॑रस्वते पितृ॒मते॒

स्वाहा॑ । विश्वा॒ आशा॑ दक्षिण॒सत् । विश्वा॑न्दे॒वान॑याडि॒ह । स्वाहा॑कृतस्य घ॒र्मस्य॑ । मधो॑ः
पिबतमश्विना । स्वाहा॒ऽग्नये॑ य॒ज्ञिया॑य । शय्यँ॒र्जु॑र्भिः ।
अश्वि॑ना घ॒र्मं पा॑तः॒ हार्दिव॒ानम् । (33)
70903
अह॑र्दि॒वाभि॑रू॒तिभि॑ः । अनु॑ व॒ान्द्यावा॑पृथि॒वी म॑ꣳसाताम् । स्वाहेन्द्रा॑य । स्वाहेन्द्रा॒वट् ।
घ॒र्मम॑पातमश्विना हार्दिव॒ानम् ।
अह॑र्दि॒वाभि॑रू॒तिभि॑ः । अनु॑ व॒ान्द्यावा॑पृथि॒वी अ॑मꣳसाताम् । तं प्रा॒व्य॑य्यँ॒था व॒ट् । नमो॑ दि॒वे । नम॑ः
पृथि॒व्यै । (34)
70904
दि॒विधा॑ इ॒मय्यँ॒ज्ञम् । य॒ज्ञमि॒मन्दि॒वि धा॑ः । दिव॑ङ्गच्छ । अ॒न्तरि॑क्षङ्गच्छ । पृ॒थि॒वीङ्ग॑च्छ । पञ्च॑ प्र॒दिशो॑
गच्छ ।
दे॒वान्घ॑र्म॒पान्ग॑च्छ । पि॒तॄन्घ॑र्म॒पान्ग॑च्छ । (35)
70900

आ॒दि॒त्यव॑ते॒ स्वाहा॑ हार्दिव॒ानं पृ॑थि॒व्या अ॒ष्टौ च॑ ।।9।।
71001
इ॒षे पी॑पिहि । ऊ॒र्जे पी॑पिहि । ब्रह्म॑णे पीपिहि । क्ष॒त्राय॑ पीपिहि । अ॒द्भ्यः पी॑पिहि । ओष॑धीभ्यः
पीपिहि । वन॒स्पति॑भ्यः पीपिहि ।
द्यावा॑पृ॒थिवीभ्यां॑ पीपिहि । सु॒भू॒ताय॑ पीपिहि । ब्र॒ह्म॒व॒र्च॒साय॑ पीपिहि । (36)
71002
यज॑मानाय पीपिहि । मह्यं॒ज्यैष्ठ्या॑य पीपिहि । त्विष्यै॑ त्वा । द्यु॒म्नाय॑ त्वा । इ॒न्द्रि॒याय॑
त्वा॒ भूत्यै॑ त्वा । धर्मा॑सि सु॒धर्मा मे॑न्य॒स्मे ।
ब्रह्मा॑णि धारय । क्ष॒त्राणि॑ धारय । विश॑न्धारय । नेत्त्वा॒ वात॑स्स्क॒न्दया॑त् । (37)
71003
अ॒मुष्य॑ त्वा प्रा॒णे सा॑दयामि । अ॒मुना॑ स॒ह नि॑र॒र्थङ्ग॑च्छ । यो॑ऽस्मान्द्वेष्टि॑ । यञ्च॑
व॒यन्द्वि॒ष्मः । पू॒ष्णे शर॑से॒ स्वाहा॑ । ग्राव॑भ्य॒ः
स्वाहा॑ । प्र॒ति॒रेभ्य॒ः स्वाहा॑ । द्यावा॑पृथि॒वीभ्या॒ꣳ स्वाहा॑ । पि॒तृभ्यो॑ घर्म॒पेभ्य॒ः
स्वाहा॑ । रु॒द्राय॑ रु॒द्रहो॑त्रे॒ स्वाहा॑ । (38)
71004
अह॒र्ज्योति॑ः के॒तुना॑ जुषताम् । सु॒ज्यो॒तिर्ज्योति॑षा॒ꣳ स्वाहा॑ । रात्रि॒र्ज्योति॑ः के॒तुना॑
जुषताम् । सु॒ज्यो॒तिर्ज्योति॑षा॒ꣳ स्वाहा॑ । अपी॑प॒रो
माऽह्नो रात्रि॑यै मा पाहि । ए॒षा ते॑ अग्ने स॒मित् । तया॒ समि॑द्ध्यस्व । आयु॑र्मे दाः । वर्च॑सा

माञ्जीः । अपीपरो मा रात्रिया अह्नो मा पाहि । (39)
71005
एषा ते अग्ने समित् । तया समिद्ध्यस्व । आयुर्मे दाः । वर्चसा माञ्जीः । अग्निर्ज्योतिर्ज्योतिरग्निः
स्वाहा । सूर्यो ज्योतिर्ज्योतिः
सूर्यः स्वाहा । भूः स्वाहा । हुतꣳ हविः । मधु हविः । इन्द्रतमेऽग्नौ । (40)
71006
पिता नोऽसि मा मा हिꣳसीः । अश्याम ते देवघर्म । मधुमतो वाजवतः पितुमतः ।
अङ्गिरस्वतस्स्वधाविनः । अशीमहि त्वा
मा मा हिꣳसीः । स्वाहा त्वा सूर्यस्य रश्मिभ्यः । स्वाहा त्वा नक्षत्रेभ्यः । (41)
71000
ब्रह्मवर्चसाय पीपिहि स्कन्दयाद्रुद्राय रुद्रहोत्रे स्वाहाऽह्नो मा पाह्यग्नौ सप्त च ।।10।।
71101
घर्म या ते दिवि शुक् । या गायत्रे छन्दसि । या ब्राह्मणे । या हविर्द्धाने । तान्त
एतेनाव यजे स्वाहा । घर्म या तेऽन्तरिक्षे
शुक् । या त्रैष्टुभे छन्दसि । या राजन्ये । याऽऽग्नीद्ध्रे । तान्त एतेनाव यजे स्वाहा । (42)
71102
घर्म या ते पृथिव्याꣳ शुक् । या जागते छन्दसि । या वैश्ये । या सदसि । तान्त एतेनाव यजे
स्वाहा । अनुनोऽद्यानुमतिः ।
अन्विदनुमते त्वम् । दिवस्त्वा परस्पायाः । अन्तरिक्षस्य तनुवः पाहि । पृथिव्यास्त्वा धर्मणा । (43)
71103
वयमनुक्रामाम सुविताय नव्यसे । ब्रह्मणस्त्वा परस्पायाः । क्षत्रस्य तनुवः पाहि । विशस्त्वा धर्मणा
। वयमनुक्रामाम
सुविताय नव्यसे । प्राणस्य त्वा परस्पायै । चक्षुषस्तनुवः पाहि । श्रोत्रस्य त्वा
धर्मणा । वयमनुक्रामाम सुविताय नव्यसे । वल्गुरसि
शय्युँधायाः । (44)
71104
शिशुर्जनधायाः । शञ्च वक्षि परि च वक्षि । चतुस्स्रक्तिर्नाभिर्ऋतस्य । सदो विश्वायुश्शर्म
सप्रथाः । अप द्वेषो अपह्वरः ।
अन्यद्व्रतस्य सश्चिम । घर्मैतत्तेऽन्नमेतत्पुरीषम् । तेन वर्द्धस्व चा च प्यायस्व ।
वर्द्धिषीमहि च वयम् । आ च प्यासिषीमहि । (45)
71105
रन्तिर्नामासि दिव्यो गन्धर्वः । तस्य ते पद्वद्धविर्द्धानम् । अग्निरद्ध्यक्षाः

। रु॒द्रोऽधि॑पतिः । सम॒हमायु॑षा । सं प्रा॒णेन॑ ।

सव्वँर्च॑सा । सं पय॑सा । सङ्गौ॑प॒त्येन॑ । सꣳ रा॒यस्पोषे॑ण । (46)

71106

व्य॑सौ । यो॓ऽस्मान्द्वेष्टि॑ । यञ्च॑ व॒यन्द्वि॒ष्मः । अचि॑क्रदद्वृ॒षा हरिः॑ । म॒हान्मि॒त्रो

न द॑र्श॒तः । सꣳ सूर्ये॑ण रोचते । चिद॑सि

समु॒द्रयो॑निः । इन्दु॒र्दक्ष॑श्श्ये॒न ऋ॒तावा॓ । हिर॑ण्यपक्षश्शकु॒नो भु॑र॒ण्युः । म॒हान्थ्स॒धस्थे॓ द्ध्रु॒व आनिष॑त्तः

। (47)

71107

नम॑स्ते अस्तु॒ मा मा॑ हिꣳसीः । वि॒श्वाव॑सुꣳ सोम गन्ध॒र्वम् । आपो॑ ददृ॒शुषीः॓ । तदृ॒तेना॒व्या॑यन्न्

। तद॒न्ववै॓त् । इन्द्रो॑ रारहा॒ण

आ॑साम् । परि॒ सूर्य॑स्य परि॒धीꣳ र॑पश्यत् । वि॒श्वाव॑सुर॒भि तन्नो॑ गृणातु । दि॒व्यो ग॑न्ध॒र्वो

रज॑सो वि॒मानः॑ । यद्वा॑ घा स॒त्यमु॒त यन्न वि॒द्म । (47)

71108

धियो॑ हिन्वा॒नो धिय॒ इन्नो॑ अव्यात् । सस्नि॑मविन्द॒च्चर॑णे न॒दीना॓म् । अपा॑वृणो॒दुरो॒ अश्म॑व्रजानाम्

। प्रासा॓न्गन्ध॒र्वो अ॒मृता॑नि

वोचत् । इन्द्रो॒ दक्षं॒ परि॑जानादहीना॓म् । ए॒तत्त्वन्दे॑व घर्म दे॒वो दे॒वानुपा॑गाः । इ॒दम॒हं

म॑नु॒ष्यो॑ मनु॒ष्यान् । सोम॑पी॒थानु॒मेहि॑ । स॒ह प्र॒जया॑ स॒ह

रा॒यस्पोषे॑ण । सु॒मि॒त्रा न॒ आप॒ ओष॑धयस्सन्तु । (49)

71109

दु॒र्मि॒त्रास्तस्मै॑ भूयासुः । यो॓ऽस्मान्द्वेष्टि॑ । यञ्च॑ व॒यन्द्वि॒ष्मः । उद्व॒यन्तम॑स॒स्परि॑

। उदु॒त्यञ्चि॒त्रम् । इ॒ममू॒षुत्यम॒स्मभ्यꣳ॑ स॒निम् ।

गा॒य॒त्रन्नवी॑याꣳसम् । अग्ने॑ दे॒वेषु॒ प्रवो॑चः । (50)

71100

याऽऽग्नी॓द्ध्रे तान्त॑ ए॒तेनाव॑ यजे॒ स्वाहा॒ धर्म॑णा श॒य्युँधा॑याः प्यासिषी॒महि॒ पोषे॑ण॒

निष॑त्तो वि॒द्म स॑न्त्व॒ष्टौ च॑ ।।11।।

71201

म॒हीनां पयो॑ऽसि॒ विहि॑तन्देव॒त्रा । ज्यो॒ति॒र्भा अ॑सि॒ वन॒स्पतीना॒मोष॑धीना॒ꣳ रसः॑ । वा॒जिन॑न्त्वा

वा॒जिनो॒ऽव॑ नयामः ।

ऊ॒र्ध्वं मनः॑स्सुव॒र्गम् । (51)

71200

--।12।।

71301

अस्क॒न्द्यौः पृ॑थि॒वीम् । अस्का॑नृष॒भो यु॒वागाः । स्क॒न्नेमा विश्वा॒ भुव॑ना । स्क॒न्नो य॒ज्ञः प्रज॑नयतु । अस्क॒ानज॑नि॒ प्राज॑नि ।
आ स्क॒न्नाज्ज्ा॑यते॒ वृषा॑ । स्क॒न्नात् प्रज॑निषीमहि । (52)
71300
-।13।
71401
या पु॒रस्ता॑द्वि॒द्युदाप॑तत् । तान्त॑ ए॒तेनाव॑ यज॒े स्वाहा॑ । या द॑क्षिण॒तः । या प॒श्चात्
। योत्त॑र॒तः । योपरि॑ष्टाद्वि॒द्युदाप॑तत् । तान्त॑
ए॒तेनाव॑ यज॒े स्वाहा॑ । (53)
71400
-।14।
71501
प्रा॒णाय॒ स्वाहा॑ व्या॒नाय॒ स्वाहा॑ऽपा॒नाय॒ स्वाहा॑ । चक्षु॑षे॒ स्वाह॒ा श्रोत्रा॑य॒ स्वाहा॑
। मन॑से॒ स्वाहा॑ वा॒चे सर॑स्वत्यै॒ स्वाहा॑ । (54)
71500
- ।15।
71601
पू॒ष्णे स्वाहा॑ पू॒ष्णे शर॑से॒ स्वाहा॑ । पू॒ष्णे प्र॑प॒त्थ्या॑य॒ स्वाहा॑ पू॒ष्णे न॒रन्धि॑षाय॒
स्वाहा॑ । पू॒ष्णेऽङ्घृ॑णये॒ स्वाहा॑ पू॒ष्णे न॒रुणा॑य॒ स्वाहा॑ ।
पू॒ष्णे सा॑के॒ताय॒ स्वाहा॑ । (55)
71600
-।16।
71701
उद॑स्य॒ शुष्मा॑द्भा॒नुर्नार्त॒ बिभ॑र्ति । भा॒रं पृ॑थि॒वी न भूम॑ । प्र शु॒क्रैतु॑ दे॒वी म॑नी॒षा
। अ॒स्मथ्सुत॑ष्टो रथो॒ न वा॒जी । अर्च॑न्त॒ एके॒
महि॒ साम॑मन्वत । तेन॒ सूर्य॑मधारयन्न् । तेन॒ सूर्य॑मरोचयन्न् । घ॒र्मश्शिर॒स्तद॒यम॒ग्निः । पुरी॑षमसि॒
संप्रि॑यं प्र॒जया॑ प॒शुभि॑र्भुवत् । प्र॒जापति॑स्त्वा
सादयतु । तया॑ दे॒वत॑याऽङ्गिर॒स्वद्ध्रु॒वा सी॑द । (56)
71700
-।17।
71801
यास्ते॑ अग्न आ॒र्द्रा योन॑यो॒ याः कु॑ल॒ायिनी॑ः । ये ते॑ अग्न॒ इन्द॑वो॒ या उ॒ नाभ॑यः । यास्ते॑ अग्ने त॒नुव॒
ऊर्जो॒ नाम॑ ।

ता॒भि॒स्त्वमु॒भयी॑भिस्सँव्वि॑दा॒नः । प्र॒जाभि॑रग्ने॒ द्रवि॑णे॒ह सी॑द । प्र॒जाप॑तिस्त्वा सादयतु

। तया॑ दे॒वत॑याऽङ्गिर॒स्वद्ध्रु॒वा सी॑द । (57)
71800

- ।18।
71901

अ॒ग्निर॑सि वैश्वान॒रो॑ऽसि । स॒व्वँ॒थ्स॒रो॑ऽसि परिवथ्स॒रो॑ऽसि । इ॒दा॒व॒थ्स॒रो॑ऽसीदुवथ्स॒रो॑ऽसि

। इ॒द्व॒थ्स॒रो॑ऽसि वथ्स॒रो॑ऽसि । तस्य॑

ते वस॒न्तश्शिर॑ः । ग्री॒ष्मो दक्षि॑णः प॒क्षः । व॒र्षाः पुच्छँ॑म् । श॒रदुत्त॑रः प॒क्षः । हे॒म॒न्तो

मद्ध्यँ॑म् । पू॒र्व॒प॒क्षाश्चित॑यः । अ॒प॒र॒प॒क्षाः पुरी॑षम् ।

अ॒हो॒रा॒त्राणीष्ट॑काः । तस्य॑ ते॒ मासाँ॑श्चार्द्धमा॒साश्च॑ कल्पन्ताम् । ऋ॒तव॑स्ते कल्पन्ताम्

। स॒व्वँ॒थ्स॒रस्ते॑ कल्पताम् । अ॒हो॒रा॒त्राणि॑ ते कल्पन्ताम् ।

ए॒ति॒ प्रेति॒ वीति॒ समित्युदिति॑ । प्र॒जाप॑तिस्त्वा सादयतु । तया॑ दे॒वत॑याऽङ्गिर॒स्वद्ध्रु॒वा सी॑द । (58)
71900

चितयो नव च ।।19।
72001

भूर्भुव॒स्सुव॑ः । ऊ॒र्द्ध्व ऊ॒षुण॑ ऊ॒तये᳚ । ऊ॒र्द्ध्वो न॑ः पा॒ह्यꣳह॑सः । वि॒धुन्द्र॑द्रा॒णꣳ

सम॑ने बहू॒नाम् । युवा॑न॒ꣳ॒ सन्त॑ं पलि॒तो ज॑गार । दे॒वस्य॑

पश्य॒ काव्य॑ं महि॒त्वाद्या म॒मार॑ । सद्य॒स्समा॑न । यद्व॒ते चि॑दभि॒श्रिष॑ः । पु॒रा ज॒र्तृभ्य॑

आ॒तृद॑ः । सन्धा॑ता स॒न्धिं म॒घवा॑ पु॒रोवसु॑ः । (59)
72002

निष्क॑र्ता॒ विह्रु॑तं॒ पुन॑ः । पुन॑रू॒र्जा स॒ह र॒य्या । मा नो॑ घर्म व्यथि॒तो वि॑व्यथो नः

। मा न॒ः पर॒मध॑र॒म्मा रजो॑नैः । मोष्व॑स्माꣳ

स्तम॑स्यन्त॒रा धा᳚ः । मा रु॒द्रिया॑सो अ॒भिगु॑र्वृ॒धान॑ः । मा न॒ः क्रतु॑भिर्हीडि॒तेभि॑र॒स्मान्

। द्विषा॑सुनीते॒ मा परा॑ दाः। मा नो॑ रु॒द्रो निर्ऋ॑ति॒र्मा न॒ो अस्ता᳚ । मा द्यावा॑पृथि॒वी ही॑डिषाताम् । (60)
72003

उप॑ नो मित्रावरुणावि॒हाव॑तम् । अ॒न्वादी᳚द्ध्याथामि॒ह न॑स्सखाया । आ॒दि॒त्याना॑ं प्रसि॑तिर्हे॒तिः

। उ॒ग्रा श॒तपा᳚ष्ठा घ॒विषा॒ परि॑ णो

वृणक्तु । इ॒मं मे॑ वरुण॒ तत्त्वा॑ यामि । त्वन्नो॑ अग्ने स त्वन्नो॑ अग्ने । त्वम॑ग्ने अ॒यासि॑

। उद्व॒यन्तम॑स॒स्परि॑ । उदु॒त्यञ्चि॒त्रम् । वय॑स्सुप॒र्णाः । (61)
72000

पु॒रोव॑सु॒र्हीडिषाताꣳ सुप॒र्णाः ।।20।।
72101

भूर्भुवस्सुवः । मयि त्यदिन्द्रियं महत् । मयि दक्षो मयि क्रतुः । मयि धायि सुवीर्यम्
। त्रिशुग्घर्मो विभातु मे । आकूत्या
मनसा सह । विराजा ज्योतिषा सह । यज्ञेन पयसा सह । ब्रह्मणा तेजसा सह । क्षत्रेण
यशसा सह । सत्येन तपसा सह । तस्य दोहमशीमहि ।
तस्य सुम्नमशीमहि । तस्य भक्षमशीमहि । तस्य त इन्द्रेण पीतस्य मधुमतः । उपहूतस्योपहूतो
भक्षयामि । (62)
72100
यशसा सह षट्च ।।21।।
72201
यास्ते अग्ने घोरास्तनुवः । क्षुच्च तृष्णा च । अस्नुक्चानाहुतिश्च । अशनया च पिपासा
च । सेदिश्चामतिश्च । एतास्ते अग्ने
घोरास्तनुवः । ताभिरमुङ्गच्छ । योऽस्मान्द्वेष्टि । यञ्च वयन्द्विष्मः ।(63)
72200
- ।22।
72301
स्निक्च स्नीहितिश्च स्निहितिश्च । उष्णा च शीता च । उग्रा च भीमा च । सदाम्नी
सेदिरनिरा । एतास्ते अग्ने घोरास्तनुवः ।
ताभिरमुङ्गच्छ । योऽस्मान्द्वेष्टि । यञ्च वयन्द्विष्मः । (64)
72300
- ।23।
72401
धुनिश्च ध्वान्तश्च ध्वनश्च ध्वनयश्च । निलिंपश्च विलिंपश्च विक्षिपः । (65)
72400
- ।24।
72501
उग्रश्च धुनिश्च ध्वान्तश्च ध्वनश्च ध्वनयश्च । सहसह्वाꣳश्च सहमानश्च
सहस्वाꣳश्च सहीयाꣳश्च । एत्य प्रेत्य विक्षिपः । (66)
72500
- ।25।
72601
अहोरात्रे त्वोदीरयताम् । अर्द्धमासास्त्वोदीञ्जयन्तु । मासास्त्वा श्रपयन्तु । ऋतवस्त्वा
पचन्तु । सव्वँथ्सरस्त्वा हन्त्वसौ । (67)
72600

- ।26।
72701

खट् फट् जहि । छिन्धी भिन्धी हन्धी कट् । इति वाचः क्रूराणि । (68)
72700

- ।27।
72801

विगा इन्द्र विचरँन्थ्स्पाशयस्व । स्वपन्तमिन्द्र पशुमन्तमिच्छ । वज्रेणामुं बोधय दुर्विदत्रम्

। स्वपतोऽस्य प्रहर भोजनेभ्यः ।

अग्ने अग्निना सव्वँदस्व । मृत्यो मृत्युना सव्वँदस्व । नमस्ते अस्तु भगवः । सकृत्ते

अग्ने नमः । द्विस्ते नमः । त्रिस्ते नमः । चतुस्ते नमः ।

पञ्चकृत्वस्ते नमः । दशकृत्वस्ते नमः । शतकृत्वस्ते नमः । आसहस्रकृत्वस्ते

नमः । अपरिमितकृत्वस्ते नमः । नमस्ते अस्तु मा मा हिंसीः । (69)
72800

त्रिस्ते नमस्सप्त च ।28।
72901

असृन्मुखो रुधिरेणाव्यक्तः । यमस्य दूतश्श्वपाद्विधावसि । गृद्ध्रस्सुपर्णः कुणपन्निषेवसे

। यमस्य दूतः प्रहितो भवस्य चोभयोः । (70)
72900

- ।29।
73001

यदेतद्वृकसो भूत्वा । वाग्देव्यभिरायसि । द्विषन्तं मेऽभिराय । तं मृत्यो मृत्यवे नय । स

आर्त्यार्तिमार्च्छतु । (71)
73000

- ।30।
73101

यदीषितो यदि वा स्वकामी । भयेडको वदति वाचमेताम् । तामिन्द्राग्नी ब्रह्मणा सव्विदानौ

। शिवामस्मभ्यङ्कृणुतङ्गृहेषु । (72)
73100

- ।31।
73201

दीर्घमुखि दुर्हणु । मा स्म दक्षिणतो वदः । यदि दक्षिणतो वदाद्विषन्तं मेऽव बाधासै । (73)
73200

- ।32।
73301

इ॒त्थादु॑लू॒क॒ आप॑प्तत् । हि॒र॒ण्या॒क्षो अयो॑मुखः । रक्ष॑सान्दू॒त आग॑तः । तमि॒तो ना॑शयाग्ने । (74)
73300

- ।33।
73401

यदे॒तद्भू॒तान्य॒न्वा॒विश्य॑ । दैवी॒र्व्वाँच॒व्व॒दसि॑ । द्वि॒षतो॑ न॒ः परा॑वदत । तान्मृ॒त्यो

मृ॒त्यवे॑ नय । त आर्त्याऽऽर्ति॒माच्छ॑न्तु ।

अ॒ग्निना॒ऽग्निस्सव्व॑दताम् । (75)
73400

- ।34।
73501

प्र॒सार्य॑ स॒क्थ्यौ॑ पत॑सि । स॒व्यमक्षि॑ नि॒पेपि॑ च । मेहक॑स्य च॒नाम॑मत् ।। (76)
73500

- ।34।
73601

अत्रि॑णा त्वा क्रिमे हन्मि । कण्वे॑न ज॒मद॑ग्निना । वि॒श्वाव॑स॒ोर्ब्रह्म॑णा ह॒तः । क्रिमी॑णा॒ं

राजा॑ । अप्ये॑षाᳶ स्थ॒पति॑र्ह॒तः । अथो॑

मा॒ताऽथो॑ पि॒ता । अथो॒ स्थू॒रा अथो॒ क्षु॒द्राः । अथो॑ कृ॒ष्णा अथो॒ श्वे॒ताः । अथो॑ आ॒शाति॑का

ह॒ताः । श्वे॒ताभि॑स्स॒ह सर्वे॑ ह॒ताः । (77)
73600

- ।35।
73701

आह॒राव॑द्य । शृ॒तस्य॑ ह॒विषो॒ यथा॑ । तथ्स॒त्यम् । यद॒मुय्य॑मस्य॒ जम्भ॑योः । आद॑धामि॒ तथा॒ हि तत् ।

खण्फण्म्रसि॑ । (78)
73700

- ।37।
73801

ब्रह्म॑णा त्वा शपामि । ब्रह्म॑णस्त्वा श॒पथे॑न शपामि । घो॒रेण॑ त्वा॒ भृगू॑णा॒ञ्चक्षु॑षा॒ प्रेक्षे॒

। रौ॒द्रेण॒ त्वाङ्गि॑रसा॒ं मन॑सा द्ध्यायामि ।

अ॒घस्य॑ त्वा॒ धार॑या विद्ध्यामि । अध॑रो॒ मत्प॑द्यस्वाऽसौ । (79)
73800

- ।38।
73901

उत्तु॑द शिमिजावरि । तल्पे॑जे॒ तल्प॒ उत्तु॑द । गि॒रीᳶ रनु॒ प्रवे॑शय । मरी॑ची॒रुप॒ सन्नु॑द

। याव॑दि॒तः पु॒रस्ता॑दु॒दया॑ति॒ सूर्यः॑ ।

तार्वदि॒तोऽमु॒न्नाशय । यो॓ऽस्मान्द्वेष्टि॑ । यञ्च॑ व॒यन्द्वि॒ष्मः । (80)
73900

- ।39।
74001

भूर्भु॒व॒स्सुव॒ो भूर्भु॒व॒स्सुव॒ो भूर्भु॒व॒स्सुव॑ः । भुवो॓ऽद्धायि॒ भुवो॓ऽद्धायि॒ भुवो॓ऽद्धायि

। नृ॒म्णायि नृ॒म्णं नृ॒म्णायि नृ॒म्णं नृ॒म्णायि

नृ॒म्णम् । नि॒धाय्यो॑ वायि नि॒धाय्यो॑ वायि नि॒धाय्यो॑ वायि । ए अ॒स्मे अ॒स्मे । सुव॒र्न ज्योती॓ः । (81)
74000

- ।40।
74101

पृ॒थि॒वी स॒मित् । ताम॒ग्निस्समि॑न्धे । साऽग्निः॑ समि॑न्धे । ताम॒हः॑ समि॑न्धे । सा म॒ा समि॑द्धा । आयु॑ष॒ा

तेज॑सा । वर्च॑सा श्रि॒या ।

यश॑सा ब्रह्मवर्च॒सेन॑ । अ॒न्नाद्ये॑न॒ समि॑न्ता॒ः॒ स्वाहा॓ । अ॒न्तरि॑क्ष॒ः॒ स॒मित् । (82)
74102

ताव्वा॒ँयुस्समि॑न्धे । सा वा॒युः॑ समि॑न्धे । ताम॒हः॑ समि॑न्धे । सा म॒ा समि॑द्धा । आयु॑ष॒ा तेज॑सा ।

वर्च॑सा श्रि॒या । यश॑सा

ब्रह्मवर्च॒सेन॑ । अ॒न्नाद्ये॑न॒ समि॑न्ता॒ः॒ स्वाहा॓ । द्यौस्स॒मित् । ताम॑दि॒त्यस्समि॑न्धे । (83)
74103

साऽऽदि॒त्यः॑ समि॑न्धे । ताम॒हः॑ समि॑न्धे । सा म॒ा समि॑द्धा । आयु॑ष॒ा तेज॑सा । वर्च॑सा श्रि॒या ।

यश॑सा ब्रह्मवर्च॒सेन॑ ।

अ॒न्नाद्ये॑न॒ समिन्ता॒ः॒ स्वाहा॓ । प्रा॒जा॒प॒त्या मे॑ स॒मिद॑सि सपत्न॒क्षय॑णी । भ्रा॒तृ॒व्य॒हा

मे॑ऽसि॒ स्वाहा॓ । अग्ने॓ व्रतपते व्र॒तञ्च॑रिष्यामि । (84)
74104

तच्छ॑केय॒न्तन्मे॑ राद्ध्यताम् । वायो॓ व्रतपत॒ आदि॑त्य व्रतपते । व्र॒ताना॓व्व्र॑तपते व्र॒तञ्च॑रिष्यामि ।

तच्छ॑केय॒न्तन्मे॑ राद्ध्यताम् ।

द्यौस्स॒मित् । ताम॑दि॒त्यस्समि॑न्धे । साऽऽदि॒त्यः॑ समि॑न्धे । ताम॒हः॑ समि॑न्धे । सा म॒ा समि॑द्धा ।

आयु॑ष॒ा तेज॑सा । (85)
74105

वर्च॑सा श्रि॒या । यश॑सा ब्रह्मवर्च॒सेन॑ । अ॒न्नाद्ये॑न॒ समि॑न्ता॒ः॒ स्वाहा॓ । अ॒न्तरि॑क्षः॑

स॒मित् । ताव्वा॒ँयुस्समि॑न्धे । सा वा॒युः॑

समि॑न्धे । ताम॒हः॑ समि॑न्धे । सा म॒ा समि॑द्धा । आयु॑ष॒ा तेज॑सा । वर्च॑सा श्रि॒या । (86)
74106

यश॑सा ब्रह्मवर्च॒सेन॑ । अ॒न्नाद्ये॑न॒ समि॑न्ता॒ꣳ स्वाहा᳚ । पृ॒थि॒वी स॒मित् । ताम॒ग्निस्समि॑न्धे
। साऽग्निꣳ समि॑न्धे । ताम॒हꣳ समि॑न्धे ।
सा म॒ा समि॑द्धा । आयु॑षा॒ तेज॑सा । वर्च॑सा श्रि॒या । यश॑सा ब्रह्मवर्च॒सेन॑ । (87)
74107
अ॒न्नाद्ये॑न॒ समि॑न्ता॒ꣳ स्वाहा᳚ । प्रा॒जा॒प॒त्या मे॑ स॒मिद॑सि सपत्न॒क्षय॑णी । भ्रा॒तृ॒व्य॒हा
मे॑ऽसि॒ स्वाहा᳚ । आदि॑त्य व्रतपते व्र॒तम॑चारिषम् ।
तद॑शक॒न्तन्मे॑ऽराधि । वायो᳚ व्रतप॒तेऽग्ने᳚ व्रतपते । व्र॒ताना᳚व्ँव्रतपते व्र॒तम॑चारिषम् ।
तद॑शक॒न्तन्मे॑ऽराधि ।। (88)
74100
स॒मिथ्समि॑न्धे व्र॒तञ्च॑रिष्या॒म्यायु॑षा॒ तेज॑सा॒ वर्च॑सा श्रि॒या यश॑सा ब्रह्मवर्च॒सेना॒ष्टौ च॑ ।41।
74201
शन्नो॒ वात॑ः पवतां मात॒रिश्वा॒ शन्न॑स्तपतु॒ सूर्य॑ः । अहा॑नि॒ शं भ॑वन्तु न॒श्शꣳ रात्रि॒ः
प्रति॑धीयताम् । शमु॒षा न॒ो व्यु॑च्छतु॒ शमा॑दि॒त्य
उदे॑तु नः । शि॒वा न॒श्शन्त॑मा भव सुमृ॒डीका॒ सर॑स्वति । मा ते॒ व्यो॑म स॒न्दृशि॑ । इडा॑यै॒ वास्त्व॑सि
वास्तु॒मद्वा᳚स्तु॒मन्तो॑ भूयास्म॒ मा वास्तो᳚श्छिथ्स्मह्यवा॒स्तुः
स भू॑या॒द्यो᳚ऽस्मान्द्वेष्टि॒ यञ्च॑ व॒यन्द्वि॒ष्मः । प्र॒ति॒ष्ठासि॑ प्रति॒ष्ठाव॑न्तो भूयास्म॒
मा प्र॑ति॒ष्ठाया᳚श्छिथ्स्मह्यप्रति॒ष्ठः स भू॑या॒द्यो᳚ऽस्मान्द्वेष्टि॒ यञ्च॑ व॒यन्द्वि॒ष्मः ।
आ वा॑त वाहि भेष॒जं वि वा॑त वाहि॒ यद्रप॑ः । त्वꣳ हि वि॒श्वभे॑षजो दे॒वाना᳚न्दू॒त ईय॑से । द्वावि॒मौ
वातौ॑ वात॒ आ सिन्धो॑रा प॑रा॒वत॑ः । (89)
74202
दक्ष॑ं मे अ॒न्य आ॒वातु॒ परा॒न्यो वा॑तु॒ यद्रप॑ः
। यद॒दो वा॑तते गृ॒हे॑ऽमृत॑स्य नि॒धिर्हि॒तः । ततो॑ नो देहि जी॒वस॒े ततो॑ नो धेहि
भेष॒जम् । ततो॑ न॒ो मह॒ आव॑ह॒ वात॒ आवा॑तु भेष॒जम् । श॒ंभूर्म॑यो॒भूर्नो॑ हृ॒दे प्र ण॒ आयूꣳ॑षि
तारिषत् । इन्द्र॑स्य गृ॒हो॑ऽसि॒ तं त्वा॒ प्रप॑द्ये सगु॒स्साश्व॑ः ।
स॒ह यन्मे॒ अस्ति॒ तेन॑ । भूः प्रप॑द्ये॒ भुव॒ः प्रप॑द्ये॒ सुव॒ः प्रप॑द्ये॒ भूर्भुव॒स्सुव॒ः
प्रप॑द्ये व॒ायुं प्रप॒द्येऽना᳚र्तां दे॒वत॒ां प्रप॒द्येऽश्मा॑नमाख॒णं प्रप॑द्ये प्र॒जाप॑तेर्ब्रह्मको॒शं
ब्रह्म॒ प्रप॑द्य॒ ओं प्रप॑द्ये । अ॒न्तरि॑क्षं म उ॒र्व॑न्तर॑ं बृ॒हद॒ग्नय॒ः पर्व॑ताश्च॒ यया॒
वात॑ः स्व॒स्त्या स्व॑स्ति॒मान्तया᳚ स्व॒स्त्या स्व॑स्ति॒मान॑सानि । प्राणा॑पानौ
मृत्योर्मा᳚ पात॒ं प्राणा॑पान॒ौ मा मा॑ हासिष्ट॒ं मयि॑ मे॒धां मयि॑ प्र॒जां मय्य॒ग्निस्तेजो॑
दधातु॒ मयि॑ मे॒धां मयि॑ प्र॒जां मयीन्द्र॑ इन्द्रि॒यं द॑धातु॒ मयि॑ मे॒धां
मयि॑ प्र॒जां मयि॒ सूर्यो॒ भ्राजो॑ दधातु॒ । (90)

74203
द्युभिर॒क्तुभिः॒ परि॑पातम॒स्मानरि॑ष्टेभिरश्विना॒ सौभ॑गेभिः । तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑ति॒ः
सिन्धुः॑ पृथि॒वी उ॒त द्यौः । कया॑ नश्चि॒त्र आ भु॑वदू॒ती स॒दावृ॑धः॒ सखा॑ । कया॒ शचि॑ष्ठया
वृ॒ता । कस्त्वा॑ स॒त्यो मदा॑ना॒ं मꣳहि॑ष्ठो मत्स॒दन्ध॑सः ।
दृ॒ढाचि॑द॒रुजे॒ वसु॑ । अ॒भी षु ण॒ः सखी॑नामवि॒ता ज॑रितॄ॒णाम् । श॒तं भ॑वास्यू॒तिभि॑ः ।
वय॑स्सुप॒र्णा उप॑सेदु॒रिन्द्र॑ं प्रि॒यमे॑धा॒ ऋष॑यो॒ नाध॑मानाः ।
अप॑ ध्वा॒न्तमू॑र्णु॒हि पू॒र्धि चक्षु॑र्मुमु॒ग्ध्य॑स्मान्नि॒धये॑व ब॒द्धान् । (91)
74204
शन्नो॑ दे॒वीर॒भिष्ट॑य॒ आपो॑ भवन्तु पी॒तये॑ । शय्यो॒र॒भिस्र॑वन्तु नः । ईशा॑ना॒ वार्या॑णा॒ं क्षय॑न्तीश्चर्॒षणी॒नाम्
। अ॒पो या॑चामि
भेष॒जम् । सुमि॒त्रा न॒ आप॒ ओष॑धयः सन्तु दुर्मि॒त्रास्तस्मै॑ भूयासु॒र्यो॑ऽस्मान्द्वेष्टि॒
यञ्च॑ व॒यन्द्वि॒ष्मः । आपो॒ हि ष्ठा म॑यो॒भुव॒स्ता न॑ ऊ॒र्जे द॑धातन ।
म॒हे रणा॑य॒ चक्ष॑से । यो व॑श्शि॒वत॑मो॒ रस॒स्तस्य॑ भाजयते॒ह न॑ः । उ॒श॒तीरि॑व मा॒तर॑ः
। तस्मा॒ अर॑ं गमाम वो॒ यस्य॒ क्षया॑य॒ जिन्व॑थ । (92)
74205
आपो॑ ज॒नय॑था च नः । पृथि॒वी शा॒न्ता साग्निना॑ शा॒न्ता सा मे॑ शा॒न्ता
शुचꣳ॑ शमयतु । अ॒न्तरि॑क्षꣳ शा॒न्तन्तद्वा॒युना॑ शा॒न्तन्तन्मे॑ शा॒न्तꣳ शुचꣳ॑ शमयतु । द्यौश्शा॒न्ता
सादि॒त्येन॑ शा॒न्ता सा मे॑ शा॒न्ता शुचꣳ॑
शमयतु । पृथि॒वी शान्ति॑र॒न्तरि॑क्ष॒ꣳ शान्ति॒र्द्यौश्शान्ति॒र्दिश॒श्शान्ति॑रवान्तरदि॒श
ाश्शान्ति॑र॒ग्निश्शान्ति॑र्वा॒युश्शान्ति॑रादि॒त्यश्शान्ति॑श्च॒न्द्रमा॒
श्शान्ति॒र्नक्ष॑त्राणि॒ शान्ति॒राप॒श्शान्ति॒रोष॑धय॒श्शान्ति॒र्वन॒स्पत॑य॒श्शान्ति॒र्गौश्शान्ति॑र॒जा
शान्ति॒रश्व॒श्शान्ति॒ꣳ पुरु॑ष॒श्शान्ति॒र्ब्रह्म॒ शान्ति॑र्ब्राह्म॒णश्शान्ति॒
श्शान्ति॑रे॒व शान्ति॒श्शान्ति॑र्मे अस्तु॒ शान्ति॑ः । तया॒हꣳ शा॒न्त्या स॑र्वशा॒न्त्या मह्य॑न्द्वि॒पदे॒
चतु॑ष्पदे च॒ शान्ति॑ं करोमि॒ शान्ति॑र्मे अस्तु॒ शान्ति॑ः ।
एह॒ श्रीश्च॒ ह्रीश्च॒ धृति॑श्च॒ तपो॑ मे॒धा प्र॑ति॒ष्ठा श्र॒द्धा स॒त्यन्धर्म॑श्चै॒तानि॒
मोत्ति॑ष्ठन्त॒मनू॒त्ति॑ष्ठन्तु॒ मा मा॒ꣳ श्रीश्च॒ ह्रीश्च॒ धृति॑श्च॒ तपो॑ मे॒धा प्र॑ति॒ष्ठा श्र॒द्धा
स॒त्यन्धर्म॑श्चै॒तानि॑ मा॒ मा हा॑सिषुः । उदायु॑षा स्वा॒युषोदोष॑धीना॒ꣳ रसे॒नोत्प॒र्जन्य॑स्य॒
शुष्मे॒णोद॑स्थाममृता॒ꣳ अनु॑ । तच्चक्षु॑र्दे॒वहि॑तं पु॒रस्ता॑च्छु॒क्रमु॒च्चर॑त् ।
पश्ये॑म श॒रद॑श्श॒तं जीवे॑म श॒रद॑श्श॒तं नन्दा॑म श॒रद॑श्श॒तं मोदा॑म श॒रद॑श्श॒तं भवा॑म
श॒रद॑श्श॒तꣳ शृ॒णवा॑म श॒रद॑श्श॒तं प्रब्र॑वाम श॒रद॑श्श॒तमजी॑ताः

स्याम श॒रद॑श्श॒तं ज्योक्च॒ सूर्यँ॑ दृ॒शे । य उद॑गान्मह॒तोऽर्णवाँ॑द्विभ्राज॑मानः सरि॒रस्य॒
मध्या॒त्स माँ॑ वृष॒भो लो॑हित॒ाक्षः सूर्यो॑ विप॒श्चिन्मन॑सा पुनातु ।
ब्रह्म॑ण॒श्चोत॑न्यसि॒ ब्रह्म॑ण आ॒णी स्थो॒ ब्रह्म॑ण आ॒वप॑नमसि धारि॒तेयं पृ॑थि॒वी ब्रह्म॑णा
म॒ही धा॑रि॒तमे॑नेन म॒हद॒न्तरि॑क्षं॒ दिवं॑ दाधार पृथि॒वीꣳ
सदे॑व॒ाय्यँद॒हव्वेँ॑द॒ तद॒हन्धा॑रयाणि॒ मा मद्वेदोऽधि॒विस्र॑सत् । मे॒धाम॒नी॒षे मावि॑शताꣳ
स॒मीची॑ भू॒तस्य॒ भव्य॒स्याव॑रुध्यै॒ सर्व॒मायु॑रयाणि॒ सर्व॒मायु॑रयाणि ।
आ॒भिर्गी॒र्भिर्यदतो॑ न ऊ॒नमाप्या॑यय हरिवो॒ वर्ध॑मानः । य॒दा स्त॒ोतृभ्यो॒ महि॑ गो॒त्रा रु॒जासि॑
भूयिष्ठ॒भाजो॒ अध॑ ते स्याम । ब्रह्म॒ प्रावा॑दिष्म॒ तन्नो॒
मा हा॑सीत् । ओं शान्ति॒श्शान्ति॒श्शान्तिः॑ ।। (93)
74200
प॒रावतो॑ दधातु ब॒द्धाञ्जिन्व॑थ दृ॒शे स॒प्त च॑ ।। 42।।

80000

[illegible]।। तैत्तिरीयारण्यके अष्टमप्रश्नप्रारंभः ।।

80101

दे॒वा वै स॒त्रमा॑सत । ऋद्धि॑परिमित॒य्यँश॑स्कामाः । ते᳚ऽब्रुवन्न् । यन्नः॑ प्रथ॒मय्यँश॑ ऋ॒च्छात् । सर्वे᳚षान्न॒स्तथ्स॒हास॒दिति॑ ।

तेषा᳚ङ्कुरुक्षे॒त्रव्वेँ᳚दि॑रासीत् । तस्यै᳚ खाण्ड॒वो द॑क्षिण॒ार्द्ध आ॑सीत् । तूर्घ्न॑मुत्तर॒ार्द्धः । प॒री॒णज्ज॑घन॒ार्द्धः । म॒रव॑ उत्क॒रः । (1)

80102

तेषा᳚म्म॒खव्वैँ᳚ष्ण॒वय्यँश॑ आर्च्छत् । तन्न्य॑कामयत । तेनापा᳚क्रामत् । तन्दे॒वा अन्वा॑यन्न् । यशो॑ऽव॒रुरु॑थ्समानाः ।

तस्या॒न्वाग॑तस्य । स॒व्याद्धनु॒रजा॑यत । दक्षि॑ण॒ादिष॑वः । तस्मा॑दिषुध॒न्वं पुण्य॑जन्म । य॒ज्ञज॑न्म॒ा हि । (2)

80103

तमेक॒ꣳ सन्त᳚म् । ब॒हव॒ो नाभ्य॑धृष्णुवन्न् । तस्म॒ादेक॑मिषुध॒न्विन᳚म् । ब॒हवो॑ऽनिषुध॒न्वा नाभिधृ॑ष्णुवन्ति । सो᳚ऽस्मयत । एकं॑ म॒ा सन्त᳚ं ब॒हव॒ो नाभ्य॑धर्षिषु॒रिति॑ । तस्य॑ सिष्मिय॒ाणस्य॒ तेजोऽपा᳚क्रामत् । तद्दे॒वा ओष॑धीषु॒ न्य॑मृजुः । ते श्य॒ामाका॑ अभवन्न् । स्म॒याका॒ वै नाम॒ैते । (3)

80104

तथ्स्म॒याका॑नाꣳ स्मयाक॒त्वम् । तस्मा᳚द्दीक्षि॒तेना॑पि॒गृह्य॑ स्मेत॒व्य᳚म् । तेज॑स॒ो धृत्यै᳚ । स धनुः॒ प्रति॒ष्कभ्या॑तिष्ठत् । ता उ॑प॒दीका॑ अब्रुव॒न्वर॑व्वृँणामहै । अथ॑ व इ॒मꣳ र॑न्धयाम । यत्र॒ क्क॑ च॒ खना॑म । तद॒पो॑ऽभितृ॒णद॒ामेति॑ । तस्मा॑दुप॒दीक॒ा यत्र॒ क्क॑ च॒ खन॑न्ति । तद॒पो॑ऽभितृ॑न्दन्ति । (4)

80105

वारे॑वृत॒ ह्या॑साम् । तस्य॒ ज्यामप्या॑दन्न् । तस्य॒ धनु॑र्वि॒प्रव॑माण॒ꣳ शिर॒ उद॑वर्तयत् । तद्द्यावा॑पृथि॒वी अनु॒प्राव॑र्तत । यत् प्राव॑र्तत । तत्प्र॑व॒र्ग्य॑स्य प्रवर्ग्य॒त्वम् । यद्घ्राँ (4) इत्यप॑तत् । तद्घ॒र्मस्य॑ घर्म॒त्वम् । म॒ह॒तो व॒ीर्य॑मपप्त॒दिति॑ । तन्म॑हाव॒ीरस्य॑ महावीर॒त्वम् । (5)

80106

यद॒स्यास्स॒मभ॑रन्न् । तथ्स॒म्राज्ञ॑स्सम्र॒ाट्त्वम् । त स्तृतन्दे॒वता᳚स्त्रे॒धा व्य॑गृह्णत । अ॒ग्निः प्रा॑तस्सव॒नम् । इन्द्रो॒ माद्ध्य॑न्दिन॒ꣳ सव॑नम् । विश्वे᳚दे॒वास्तृ॑तीयसव॒नम् । तेनाप॑शीर्ष्णा य॒ज्ञेन॒ यज॑मानाः । नाशिषो॒ऽवारु॑न्धत । न

सुवर्गल्लोकमभ्यजयन्
। ते देवा अश्विनावब्रुवन् । (6)
80107
भिषजौ वै स्थः । इदय्यँज्ञस्य शिरः प्रतिधत्तमिति । तावब्रूताव्वँरव्वृँणावहै । ग्रह एव नावत्रापि गृह्यतामिति ।
ताभ्यामेतमाश्विनमगृह्णन् । तावेतद्यज्ञस्य शिरः प्रत्यधत्ताम् । यत्प्रवर्ग्यः
। तेन सशीर्ष्णा यज्ञेन यजमानाः । अवाशिषोऽरुन्धत । अभि
सुवर्गल्लोकमजयन् । यत्प्रवर्ग्यं प्रवृणक्ति । यज्ञस्यैव तच्छिरः प्रतिदधाति
। तेन सशीर्ष्णा यज्ञेन यजमानः । अवाशिषो रुन्धे । अभि
सुवर्गल्लोकञ्जयति । तस्मादेष आश्विनप्रवया इव । यत्प्रवर्ग्यः ।। (7)
80100

उत्करो ह्येते तृन्दन्ति महावीरत्वमब्रुवन्नजयन्थ्सप्त च ।।1।।
80201
सावित्रञ्जुहोति प्रतिष्ठित्यै । चतुर्गृहीतेन जुहोति । चतुष्पादः पशवः । पशूनेवावरुन्धे
। चतस्रो दिशः । दिक्ष्वेव प्रतितिष्ठति ।
छन्दाꣳसि देवेभ्योऽपाक्रामन् । न वोऽभागानि हव्यव्वँक्ष्याम इति । तेभ्य एतच्चतुर्गृहीतमधारयन्
। पुरोनुवाक्यायै याज्यायै । (8)
80202
देवतायै वषट्काराय । यच्चतुर्गृहीतञ्जुहोति । छन्दाꣳस्येव तत् प्रीणाति । तान्यस्य
प्रीतानि देवेभ्यो हव्यव्वँहन्ति । ब्रह्मवादिनो वदन्ति ।
होतव्यन्दीक्षितस्य गृहा (3) इ न होतव्या (3) मिति । हविर्वै दीक्षितः । यज्जुहुयात्
। हविष्कृतय्यँजमानमग्नौ प्रदध्यात् । यन्न जुहुयात् । (9)
80203
यज्ञपरुरन्तरियात् । यजुरेव वदेत् । न हविष्कृतय्यँजमानमग्नौ प्रदधाति । न
यज्ञपरुरन्तरेति । गायत्री छन्दाꣳस्यत्यमन्यत ।तस्यै वषट्कारोऽभ्यय्य शिरोऽच्छिनत्
। तस्यै द्वेधा रसः परापतत् । पृथिवीमर्द्धः प्राविशत् । पशूनर्द्धः । यः पृथिवीं प्राविशत् । (10)
80204
स खदिरोऽभवत् । यः पशून् । सोऽजाम् । यत्खादिर्यभ्रिर्भवति । छन्दसामेव रसेन यज्ञस्य
शिरस्संभरति । यदौदुंबरी । ऊर्वा
उदुंबरः । ऊर्जैव यज्ञस्य शिरस्संभरति । यद्वैणवी । तेजो वै वेणुः । (11)
80205

तेज॑सै॒व य॒ज्ञस्य॒ शिर॒स्सं भ॑रति । यद्वै॑कङ्कती । भा ए॒वाव॑रुन्धे । दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒व

इत्यभ्रि॒मादॅ॑त्ते॒ प्रसूँ॑त्यै ।

अ॒श्विनो॑र्बा॒हुभ्या॒मित्या॑ह । अ॒श्विनौ॒ हि दे॒वाना॑मद्ध्व॒र्यू आस्ता॑म् । पू॒ष्णो हस्ता॑भ्या॒मित्या॑ह॒

यत्यै॑ । वज्र॑ इव॒ वा ए॒षा । यद॒भ्रिः । अभ्रि॑रसि॒

नारि॑र॒सीत्या॑ह॒ शान्त्यै॑ । (12)

80206

अ॒द्ध्व॒र॒कृद्दे॒वेभ्य॒ इत्या॑ह । य॒ज्ञो वा अ॑द्ध्व॒रः । य॒ज्ञ॒कृद्दे॒वेभ्य॒ इति॒ वावैतदा॑ह

। उत्ति॑ष्ठ ब्रह्मणस्पत॒ इत्या॑ह । ब्रह्म॑णै॒व य॒ज्ञस्य॒

शिरोऽच्छै॑ति । प्रैतु॒ ब्रह्म॑ण॒स्पति॒रित्या॑ह । प्रेत्यै॒व य॒ज्ञस्य॒ शिरोऽच्छै॑ति । प्र

दे॒व्ये॑तु सू॒नृतेत्या॑ह । य॒ज्ञो वै सू॒नृता॑ । अच्छा॑ वी॒रन्नर्यं॑ प॒ङ्क्तिरा॑धस॒मित्या॑ह । (13)

80207

पाङ्क्तो॒ हि य॒ज्ञः । दे॒वा य॒ज्ञन्न॑यन्तु न॒ इत्या॑ह । दे॒वाने॒व य॑ज्ञ॒निय॑ः कुरुते । देवी॑ द्यावापृथिवी॒

अनु॑मेमꣳसाथा॒मित्या॑ह ।

आ॒भ्यामे॒वानु॑मतो य॒ज्ञस्य॒ शिर॒स्सं भ॑रति । ऋ॒द्ध्यास॑म॒द्य म॒खस्य॒ शिर॒ इत्या॑ह । य॒ज्ञो

वै म॒खः । ऋ॒द्ध्यास॑म॒द्य य॒ज्ञस्य॒ शिर॒ इति वावैतदा॑ह ।

म॒खाय॑ त्वा म॒खस्य॑ त्वा शी॒र्ष्ण इत्या॑ह । नि॒र्दिश्यै॒वैन॒न्द्धरति । (14)

80208

त्रिर्ह॑रति । त्रय॑ इ॒मे लो॒काः । ए॒भ्य ए॒व लो॒केभ्यो॑ य॒ज्ञस्य॒ शिर॒स्सं भ॑रति । तू॒ष्णीञ्च॑तु॒र्थꣳ

ह॑रति । अप॑रिमितादे॒व य॒ज्ञस्य॒

शिर॒स्सं भ॑रति । मृत्ख॒नादग्रे॑ हरति । तस्मा॑न्मृत्ख॒नः क॑रु॒ण्य॑तरः । इय॒त्यग्र॑ आसी॒रित्या॑ह

। अ॒स्यामे॒वाछं॑बद्धारय्यँ॒ज्ञस्य॒ शिर॒स्सं भ॑रति । ऊर्ज॒व्वाँ

ए॒तꣳ रसं॑ पृथि॒व्या उ॑प॒दीका॒ उद्दि॑हन्ति । (15)

80209

यद्व॒ल्मीकं॑म् । यद्व॑ल्मीकव॒पा सं॑भा॒रो भव॑ति । ऊर्ज॑मे॒व रसं॑ पृथि॒व्या अव॑रुन्धे । अथो॒

श्रोत्र॑मे॒व । श्रोत्र॒ ह्ये॑तत्पृ॑थि॒व्याः ।

यद्व॒ल्मीकः॑ । अब॑धिरो भवति । य ए॒वव्वेँद॑ । इन्द्रो॑ वृ॒त्राय॒ वज्र॒मुद॑यच्छत् । स यत्र॑यत्र प॒राक्र॑मत ।

(16)

80210

तन्नादि॒ध्रि॑यत । स पू॑तीकस्त॒म्बे परा॑क्रमत । सो॑ऽदि॒ध्रियत । सो॑ऽब्रवीत् । ऊ॒तिव्वैँ मे॑ धा॒ इति॑ ।

तदू॒तीका॑नामूतीक॒त्वम् ।

यदू॒तीका॒ भव॑न्ति । य॒ज्ञायै॒वोतिन्द॑धति । अ॒ग्नि॒जा अ॑सि प्र॒जाप॑ते॒ रेत॒ इत्या॑ह । य ए॒व रस॑ः

प॒शून्प्रावि॑शत् । (17)
80211
त॒मे॒वाव॑रुन्धे । पञ्चै॒ते सं॑भा॒रा भ॑वन्ति । पाङ्क्तो॑ य॒ज्ञः । यावा॑ने॒व य॒ज्ञः । तस्य॒
शिर॒स्संभ॑रति । यद्ग्राम्याणां᳚ पशू॒नाञ्चर्म॑णा
सं॒भरे᳚त् । ग्राम्यान्प॒शूञ्छु॒चाऽर्प॑येत् । कृ॒ष्णा॒जि॒नेन॒ संभ॑रति । आ॒र॒ण्याने॒व प॒शूञ्छु॒चार्प॑यति
। तस्मा᳚थ्स॒माव॑त्पशू॒नां प्र॒जाय॑मानानाम् । (18)
80212
आ॒र॒ण्याः प॒शव॒ः कनी॑याꣳसः । शु॒चा ह्यृ॑ताः । लो॒म॒तस्संभ॑रति । अ॒तो ह्य॑स्य॒ मेद्ध्य᳚म्
। प॒रि॒गृह्या॑यन्ति । रक्ष॑सा॒मप॑हत्यै ।
ब॒हवो॑ हरन्ति । अप॑चितिमे॒वास्मि॒न्दधति । उद्ध॑ते॒ सिक॑तोपोप्ते॒ परि॑श्रिते॒ निद॑धति॒ शान्त्यै᳚
। मद॑न्तीभि॒रुप॑सृजति । (19)
80213
तेज॑ ए॒वास्मि॒न्दधाति । मधु॑ त्वा मधु॒ला क॑रो॒त्वित्या॑ह । ब्रह्म॑णै॒वास्मि॒न्तेजो॑ दधाति
। यद्ग्राम्याणा॒ं पात्रा॑णाङ्क॒पालै᳚स्सꣳसृ॒जेत् ।
ग्राम्याणि॒ पात्रा॑णि शु॒चाऽर्प॑येत् । अ॒र्म॒क॒पा॒लैस्सꣳसृ॑जति । ए॒तानि॒ वा अ॑नुपजीव॒नीयानि॑
। तान्ये॒व शु॒चार्प॑यति । शर्क॑राभि॒स्सꣳसृ॑जति॒ धृत्यै᳚ ।
अथो॑ श॒न्त्वाय॑ । अ॒ज॒लो॒मैस्सꣳसृ॑जति । ए॒षा वा अ॒ग्नेः प्रि॒या त॒नूः । यद॒जा । प्रि॒यये॒वैन॑न्त॒नुवा॒
सꣳसृ॑जति । अथो॒ तेज॑सा । कृ॒ष्णा॒जि॒नस्य॒
लोम॑भि॒ः सꣳसृ॑जति । य॒ज्ञो वै कृ॑ष्णाजि॒नम् । य॒ज्ञेनै॒व यज्ञꣳ सꣳसृ॑जति ॥ (20)
80200

या॒ज्या॑यै॒ न जु॑हु॒यादवि॑श॒द्वेणु॒श्शन्त्यै॑ प॒ङ्क्तिरा॑धस॒मित्या॑ह हरति दिहन्ति प॒राक्र॑म॒ताविशत्
प्र॒जाय॑मानानाꣳ सृजति श॒न्त्वाया॒ष्टौ च॑ ॥2॥
80301
परि॑श्रिते करोति । ब्र॒ह्म॒व॒र्च॒सस्य॒ परि॑गृहीत्यै । न कु॒र्वन्न॒भि प्रा᳚ण्यात् । यत्कु॒र्वन्न॒भि
प्रा॒ण्यात् । प्रा॒णाञ्छु॒चार्प॑येत् । अ॒प॒हाय॒
प्राणि॑ति । प्रा॒णाना᳚ङ्गोपी॒थाय॑ । न प्र॑व॒र्ग्यं᳚ञ्चादि॒त्यञ्चान्त॒रे॑यात् । यद॑न्त॒रे॒यात् । दु॒श्चर्मा᳚ स्यात् । (21)
80302
तस्मा॒न्नान्त॒राय्य᳚म् । आ॒त्मनो॑ गोपी॒थाय॑ । वेणु॑ना करोति । तेजो॒ वै वेणु॑ः । तेज॑ः प्रव॒र्ग्यः॑ ।
तेज॑सै॒व तेज॒स्सम॑र्द्धयति ।
म॒खस्य॒ शिरो॒ऽसीत्या॑ह । य॒ज्ञो वै म॒खः । तस्यै॒तच्छिर॑ः । यत्प्र॑व॒र्ग्यः॑ । (22)
80303

तस्मा॑दे॒वमा॑ह । य॒ज्ञस्य॑ प॒दे स्थ॒ इत्या॑ह । य॒ज्ञस्य॒ ह्ये॑ते प॒दे । अथो॒ प्रति॑ष्ठित्यै
। गा॒य॒त्रेण॑ त्वा॒ छन्द॑सा क॒रोमीत्या॑ह ।
छन्दो॑भिरे॒वैन॑ङ्करोति । त्र्यु॑द्धिङ्करोति । त्रय॑ इ॒मे ल॒ोकाः । ए॒षाल्लो॒ँकाना॒माप्त्यै॑ । छन्दो॑भिः करोति ।
(23)
80304
वी॒र्यं॑व्वैँ छन्दाꣳ॑सि । वी॒र्ये॑णै॒वैन॑ङ्करोति । यजु॑षा॒ बिल॑ङ्करोति॒ व्यावृ॑त्यै । इय॑न्तङ्करोति
। प्र॒जाप॑तिना यज्ञमु॒खेन॒ संमि॑तम् ।
इय॑न्तङ्करोति । य॒ज्ञप॒रुषा॒ संमि॑तम् । इय॑न्तङ्करोति । ए॒ताव॒द्वै पुरु॑षे वी॒र्यं॑म् । वी॒र्य॑संमितम् । (24)
80305
अप॑रिमितङ्करोति । अप॑रिमित॒स्याव॑रुद्ध्यै । प॒रि॒ग्री॒वङ्करोति॒ धृत्यै॑ । सूर्य॑स्य॒ हर॑सा
श्रा॒येत्या॑ह । य॒था॒य॒जु॒रे॒वैतत् । अ॒श्व॒श॒केन॑
धूपयति । प्रा॒जा॒प॒त्यो वा अश्व॑स्सयोनि॒त्वाय॑ । वृष्णो॒ अश्व॑स्य नि॒ष्पद॒सीत्या॑ह । अ॒सौ
वा आ॑दि॒त्यो वृषाऽश्वः॑ । तस्य॒ छन्दाꣳ॑सि नि॒ष्पत् । (25)
80306
छन्दो॑भिरे॒वैन॑न्धूपयति । अ॒र्चिषे॑ त्वा शो॒चिषे॒ त्वेत्या॑ह । तेज॑ ए॒वास्मि॑न्दधाति । वा॒रु॒णो॑ऽभीद्धः
। मै॒त्रियोपै॑ति॒ शान्त्यै॑ ।
सिद्ध्यै॒ त्वेत्या॑ह । य॒था॒य॒जु॒रे॒वैतत् । दे॒वस्त्वा॑ सवि॒तोद्व॑प॒त्वित्या॑ह । स॒वि॒तृप्र॑सूत
ए॒वैनं॒ ब्रह्म॑णा दे॒वता॑भि॒रुद्व॑पति । अप॑द्यमानः पृथि॒व्यामाशा॒
दिश॒ आपृ॑णेत्या॑ह । (26)
80307
तस्मा॑द॒ग्निस्सर्वा॒ दिशोऽनु॒ विभा॑ति । उत्ति॑ष्ठ बृ॒हन्भ॑व॒ोर्ध्वस्ति॑ष्ठ द्ध्रु॒वस्त्वमित्या॑ह॒
प्रति॑ष्ठित्यै । ई॒श्व॒रो वा ए॒षो॑ऽन्धो भवि॑तोः ।
यः प्र॑व॒र्ग्य॑म॒न्वीक्ष॑ते । सूर्य॑स्य त्वा॒ चक्षु॒षाऽन्वी॑क्ष॒ इत्या॑ह । चक्षु॑षो गोपी॒थाय॑
। ऋ॒जवे॑ त्वा सा॒धवे॑ त्वा सुक्षि॒त्यै त्वा॒ भूत्यै॒ त्वेत्या॑ह । इ॒यव्वाँ
ऋ॒जुः । अ॒न्तरि॑क्षꣳ सा॒धु । अ॒सौ सु॑क्षि॒तिः । (27)
80308
दिशो॒ भूति॑ः । इ॒माने॒वास्मै॑ ल॒ोकान्क॑ल्पयति । अथो॒ प्रति॑ष्ठित्यै । इ॒दम॒हम॒मुमा॑मुष्याय॒णव्विँ॒शा
प॒शुभि॑र्ब्रह्मवर्च॒सेन॒ पर्यू॑हामीत्या॑ह ।
वि॒शैवैन॑ं प॒शुभि॑र्ब्रह्मवर्च॒सेन॒ पर्यू॑हति । वि॒शेति॑ राज॒न्य॑स्य ब्रूयात् । वि॒शैवैनं॒
पर्यू॑हति । प॒शुभि॒रिति॒ वैश्य॑स्य । प॒शुभि॒रे॒वैनं॒ पर्यू॑हति । अ॒सु॒र्यं॑
पात्र॒मना॑च्छृण्णम् । (28)

80309
आच्छृ॑णत्ति । दे॒व॒त्राकः॑ । अ॒ज॒क्षी॒रेणाच्छृ॑णत्ति । प॒र॒मव्वाँ॑ ए॒तत्पयः॑ । यद॑जक्षी॒रम्
। प॒र॒मे॒णै॒वैन॑ं पय॒साच्छृ॑णत्ति । यजु॒॑षा॒
व्यावृ॑त्त्यै । छन्दो॑भि॒राच्छृ॑णत्ति । छन्दो॑भि॒र्वा ए॒ष क्रि॑यते । छन्दो॑भिरे॒व छन्दा॒ꣳ॒स्याच्छृ॑णत्ति
। छृ॒न्धि वाच॒मित्या॑ह । वाच॑मे॒वाव॑रुन्धे ।
छृ॒न्ध्यूर्ज॒मित्या॑ह । ऊर्ज॑मे॒वाव॑रुन्धे । छृ॒न्धि ह॒विरित्या॑ह । ह॒विरे॒वाकः॑ । देव॑
पुरश्चर स॒घ्यास॒न्त्वेत्या॑ह । य॒था॒य॒जुरे॒वैतत् ।। (29)
80300

स्या॒द्यत् प्र॑व॒र्ग्य॑श्छन्दो॑भिः करोति वी॒र्य॑सम्मित॒ञ्छन्दा॒ꣳ॑सि नि॒ष्पत्पृ॒णेत्या॑ह
सुक्षि॒तिरना॑च्छृण्ण॒ञ्छन्दा॒ꣳ॒स्याच्छृ॑णत्त्य॒ष्टौ च॑ ।।3।।
80401
ब्रह्म॒न्प्रच॑रिष्यामो॒ होत॑र्घ॒र्मम॒भिष्टु॒हीत्या॑ह । ए॒ष वा ए॒तर्हि॒ बृह॒स्पति॑ः । यद्ब्रह्मा
। तस्मा॑ ए॒व प्र॑ति॒प्रोच्य॒ प्रच॑रति । आ॒त्मनोऽना॑र्त्यै ।
य॒माय॑ त्वा म॒खाय॒ त्वेत्या॑ह । ए॒ता वा ए॒तस्य॑ दे॒वता॑ः । ताभि॑रे॒वैन॒ꣳ॒ सम॑र्द्धयति
। मद॑न्तीभि॒ः प्रोक्ष॑ति । तेज॑ ए॒वास्मि॑न्दधाति । (30)
80402
अ॒भि॒पू॒र्वं प्रोक्ष॑ति । अ॒भि॒पू॒र्वमे॒वास्मि॒न्तेजो॑ दधाति । त्रिः प्रोक्ष॑ति । त्र्या॑वृ॒द्धि
य॒ज्ञः । अथो॑ मेद्ध्य॒त्वाय॑ । होताऽन्वा॑ह ।
रक्ष॑सा॒मप॑हत्यै । अन॑वानम् । प्रा॒णाना॒ꣳ॒ सन्त॑त्यै । त्रि॒ष्टुभ॑स्स॒तीर्गा॑य॒त्रीरि॒वान्वा॑ह । (31)
80403
गा॒य॒त्रो हि प्रा॒णः । प्रा॒णमे॒व यज॑माने दधाति । सन्त॑त॒मन्वा॑ह । प्रा॒णाना॑म॒न्नाद्य॑स्य॒ सन्त॑त्यै । अथो॒
रक्ष॑सा॒मप॑हत्यै ।
यत्परि॑मिता अनुब्रू॒यात् । परि॑मित॒मव॑रुन्धीत । अप॑रिमित॒ा अन्वा॑ह । अप॑रिमित॒स्याव॑रुद्ध्यै । शिरो॒
वा ए॒तद्य॒ज्ञस्य॑ । (32)
80404
यत्प्र॑व॒र्ग्य॑ः । ऊर्ग्मु॑ञ्जाः॑ । यन्मौ॒ञ्जो वे॒दो भव॑ति । ऊ॒र्जैव य॒ज्ञस्य॒ शिर॒स्सम॑र्द्धयति
। प्रा॒णा॒हु॒तीर्जु॑होति । प्रा॒णाने॒व यज॑माने
दधाति । स॒प्त जु॑होति । स॒प्त वै शी॑र्ष॒ण्या॑ः प्रा॒णाः । प्रा॒णाने॒वास्मि॑न्दधाति । दे॒वस्त्वा॑
सवि॒ता मद्ध्वाऽन॒क्त्विवत्या॑ह । (33)
80405
तेज॑सै॒वैन॑मनक्ति । पृ॒थि॒वीन्तप॑सस्त्रा॒य॒स्वेति॒ हिर॑ण्य॒मुपा॑स्यति । अ॒स्या अन॑तिदाहाय

। शिरो॒ वा ए॒तद्य॒ज्ञस्य॑ । यत्प्र॑व॒र्ग्यः॑ ।
अ॒ग्निस्सर्वा॑ दे॒वताः᳚ । प्र॒ल॒वाना॒दीप्योपा᳚स्यति । दे॒वता᳚स्वे॒व य॒ज्ञस्य॒ शिरः॒ प्रति॑दधाति
। अप्र॑तिशीर्णाग्रं भवति । ए॒तद्व॑र्॒हि॒र्ह्ये॑षः । (34)
80406
अ॒र्चिर॑सि श॒ोचिर॒सीत्या॑ह । तेज॑ ए॒वास्मि॒न्ब्र॑ह्मवर्च॒सन्द॑धाति । सꣳसी॑दस्व म॒हाꣳ अ॒सीत्या॑ह
। म॒हान् ह्ये॑षः । ब्र॒ह्म॒वा॒दिनो॑ वदन्ति ।
ए॒ते वाव त ऋ॒त्विजः॑ । ये द॑र्॒शपूर्णमा॒सयोः᳚ । अथ॑ कु॒था होता॒ यज॑मानाया॒शिषो॒ नाशा᳚स्त॒
इति॑ । पु॒रस्ता॑दाश॒ीः खलु॒ वा अ॒न्यो य॒ज्ञः ।
उ॒परि॑ष्टादाशीर॒न्यः । (35)
80407
अ॒ना॒धृष्या पु॒रस्ता॒दिति॒ यदे॒तानि॒ यजूꣳ॒ष्याह॑ । शी॒र्॒ष॒त ए॒व य॒ज्ञस्य॒ यज॑मान आ॒शिषोऽव॑रुन्धे ।
आयुः॑ पु॒रस्ता॑दाह ।
प्र॒जान्द॑क्षिण॒तः । प्रा॒णं प॒श्चात् । श्रोत्र॑मुत्तर॒तः । विधृ॑तिमु॒परि॑ष्टात् । प्रा॒णाने॒वास्मै᳚
स॒मीचो॑ दधाति । ई॒श्व॒रो वा ए॒ष दिशोऽनून्म॑दितोः ।
यन्दिशोऽनु॑ व्यास्था॒पय॑न्ति । (36)
80408
मनो॒रश्वा॑सि॒ भूरि॑पु॒त्रेती॒माम॒भिमृ॑शति । इ॒यव्वँ᳚ मनो॒रश्वा॒ भूरि॑पुत्रा । अ॒स्यामे॒व
प्रति॑तिष्ठत्यनु॒न्मादाय । सू॒प॒सदा॑ मे भूया॒ मा
मा॑ हिꣳसी॒रित्या॒हाहिꣳ॑सायै । चित॑स्स्थ परि॒चित॒ इत्या॑ह । अप॑चितिमे॒वास्मि॒न्दधाति । शिरो॒
वा ए॒तद्य॒ज्ञस्य॑ । यत्प्र॑व॒र्ग्यः॑ । अ॒सौ खलु॒ वा आ॑दि॒त्यः
प्र॒व॒र्ग्यः॑ । तस्य॑ म॒रुतो॑ र॒श्मयः॑ । (37)
80409
स्वाहा॑ म॒रुद्भिः॒ परि॑श्रय॒स्वेत्या॑ह । अ॒मुमे॒वादि॒त्यꣳ र॒श्मिभिः॒ पर्यू॑हति । तस्मा॑द॒सावा॑दि॒त्यो॑ऽमुष्मि॑ल्लोँ॒के
र॒श्मिभिः॒ पर्यू॑ढः ।
तस्मा॒द्राजा॑ वि॒शा पर्यू॑ढः । तस्मा᳚द्ब्राम॒णीस्स॑जा॒तैः पर्यू॑ढः । अ॒ग्नेस्सृ॒ष्टस्य॑ य॒तः
। विक॑ङ्कतं॒ भा आ᳚र्च्छत् । यद्वैक॑ङ्कताः परि॒धयो॒ भव॑न्ति । भा
ए॒वाव॑रुन्धे । द्वाद॑श भवन्ति । (38)
80410
द्वाद॑श॒ मासा᳚स्सव्वँ॑थ्स॒रः । स॒व्वँ॒थ्स॒रमे॒वाव॑रुन्धे । अस्ति॑ त्रयोद॒शो मास॒ इत्या॑हुः
। यत्त्र॑योद॒शः प॑रि॒धिर्भव॑ति । तेनै॒व त्र॑योद॒शं
मास॒मव॑रुन्धे । अ॒न्तरि॑क्षस्यान्त॒र्द्धिर॒सीत्या॑ह॒ व्यावृ॑त्त्यै । दिव॒न्तप॑सस्त्राय॒स्वेत्यु॒परि॑ष्टाद्धिर॑ण्य॒मधि॒

निर्दधाति । अमुष्या अनतिदाहाय । अथो
आभ्यामेवैनमुभयतः परिगृह्णाति । अर्हन् बिभर्षि सायकानि धन्वेत्याह । (39)
80411
स्तौत्येवैनमेतत् । गायत्रमसि त्रैष्टुभमसि जागतमसीति धवित्राण्यादत्ते ।
छन्दोभिरेवैनान्यादत्ते । मधु मध्विति धूनोति ।
प्राणो वै मधु । प्राणमेव यजमाने दधाति । त्रिः परियन्ति । त्रिवृद्धि प्राणः । त्रिः परियन्ति ।
त्र्यावृद्धि यज्ञः । (40)
80412
अथो रक्षसामपहत्यै । त्रिः पुनः परियन्ति । षट्थ्संपद्यन्ते । षड्वा ऋतवः । ऋतुष्वेव प्रतितिष्ठन्ति ।
यो वै घर्मस्य
प्रियान्तनुवमाक्रामति । दुश्चर्मा वै स भवति । एष ह वा अस्य प्रियान्तनुवमाक्रामति
। यत् त्रिः परीत्य चतुर्थं पर्येति । एताः ह वा
अस्योग्रदेवो राजनिराचक्राम । (41)
80413
ततो वै स दुश्चर्माऽभवत् । तस्मात्त्रिः परीत्य न चतुर्थं परीयात् । आत्मनो गोपीथाय । प्राणा वै
धवित्राणि ।
अव्यतिषङ्गन्धून्वन्ति । प्राणानामव्यतिषङ्गाय क्लृप्त्यै । विनिषद्य धून्वन्ति । दिक्ष्वेव
प्रतितिष्ठन्ति । ऊर्ध्वन्धून्वन्ति । सुवर्गस्य लोकस्य समष्ट्यै ।
सर्वतो धून्वन्ति । तस्मादयः सर्वतः पवते ।। (42)
80400

दधातीवान्वाह यज्ञस्याहैष उपरिष्टादाशीरन्यो व्यास्थापयन्ति रश्मयो भवन्ति
धन्वेत्याह यज्ञश्चक्राम समष्ट्यै द्वे च ।।4।।
80501
अग्निष्ट्वा वसुभिः पुरस्ताद्रोचयतु गायत्रेण छन्दसेत्याह । अग्निरेवैनव्वँसुभिः
पुरस्ताद्रोचयति गायत्रेण छन्दसा । समारुचितो
रोचयेत्याह । आशिषमेवैतामाशास्ते । इन्द्रस्त्वा रुद्रैर्दक्षिणतो रोचयतु त्रैष्टुभेन
छन्दसेत्याह । इन्द्र एवैनः रुद्रैर्दक्षिणतो रोचयति त्रैष्टुभेन
छन्दसा । समारुचितो रोचयेत्याह । आशिषमेवैतामा शास्ते । वरुणस्त्वाऽऽदित्यैः पश्चाद्रोचयतु
जागतेन छन्दसेत्याह । वरुण एवैनमादित्यैः
पश्चाद्रोचयति जागतेन छन्दसा । (43)
80502

समा॑रुचि॒तो रो॑च॒येत्या॑ह । आ॒शिष॑मे॒वैतामाशा॑स्ते । द्यु॒ता॒नस्त्वा॑ मारु॒तो म॒रुद्भि॑रुत्त॒र॒तो
रो॑चय॒त्वानु॑ष्टुभेन॒ छन्द॒सेत्या॑ह । द्यु॒ता॒न
ए॒वैन॑ं मारु॒तो म॒रुद्भि॑रुत्त॒र॒तो रो॑चय॒त्यानु॑ष्टुभेन॒ छन्द॑सा । समा॑रुचि॒तो रो॑च॒येत्या॑ह
। आ॒शिष॑मे॒वैतामा शा॑स्ते । बृह॒स्पति॑स्त्वा॒ विश्वै॑र्दे॒वैरु॒परि॑ष्टा
द्रोचयतु॒ पाङ्क्ते॑न॒ छन्द॒सेत्या॑ह । बृह॒स्पति॑रे॒वैन॒व्विश्वै॑र्दे॒वैरु॒परि॑ष्टाद्रोचयति॒
पाङ्क्ते॑न॒ छन्द॑सा । समा॑रुचि॒तो रो॑च॒येत्या॑ह । आ॒शिष॑मे॒वैतामाशा॑स्ते । (44)
80503
रो॒चि॒तस्त्वन्दे॑व घर्म दे॒वेष्वसीत्या॑ह । रो॒चि॒तो ह्ये॑ष दे॒वेषु॒ । रो॒चि॒षी॒याहं म॑नु॒ष्ये॑ष्वित्या॑ह
। रोच॑त ए॒वैष म॑नु॒ष्ये॑षु । सम्रा॑ड्घर्म
रुचि॒तस्त्वन्दे॒वेष्वायु॑ष्मा॒ᳲ स्तेज॒स्वी ब्र॑ह्मवर्च॒स्य॑सीत्या॑ह । रु॒चि॒तो ह्ये॑ष दे॒वेष्वायु॑ष्मा॒ᳲ
स्तेज॒स्वी ब्र॑ह्मवर्च॒सी । रु॒चि॒तो॑ऽहं म॑नु॒ष्ये॑ष्वायु॑ष्मा॒ᳲ स्तेज॒स्वी
ब्र॑ह्मवर्च॒सी भू॑यास॒मित्या॑ह । रु॒चि॒त ए॒वैष म॑नु॒ष्ये॑ष्वायु॑ष्मा॒ᳲ स्तेज॒स्वी ब्र॑ह्मवर्च॒सी
भ॑वति । रुग॑सि॒ रुच॑ं मयि॑ धेहि॒ मयि॒ रुगित्या॑ह ।
आ॒शिष॑मे॒वैतामाशा॑स्ते । तय्यँदे॒तैर्यजु॑र्भि॒ररो॑चयि॒त्वा । रु॒चि॒तो घ॒र्म इति॑ प्रब्रू॒यात्
। अरो॑चुकोऽद्ध्व॒र्युस्स्यात् । अरो॑चुक॒ो यज॑मानः । अथ॒
यदे॑नमे॒तैर्यजु॑र्भी रोचयि॒त्वा । रु॒चि॒तो घर्म॒ इति॒ प्राह॑ । रोचु॑कोऽद्ध्व॒र्युर्भ॑वति । रोचु॑क॒ो यज॑मानः ।।
(45)
प॒श्चाद्रो॑चयति॒ जाग॑तेन॒ छन्द॑सा॒ पाङ्क्ते॑न॒ छन्द॑सा॒ समा॑रुचि॒तो रो॑च॒येत्या॑हा॒शिष॑मे॒वैतामाशा॑स्ते
शास्ते॒ऽष्टौ च॑ ।।5।।
80601
शिरो॒ वा ए॒तद्य॒ज्ञस्य॑ । यत् प्र॑व॒र्ग्यः॑ । ग्री॒वा उ॑प॒सदः॑ । पु॒रस्ता॑दुप॒सदा॑ं प्रव॒र्ग्य॑ं
प्रवृ॑णक्ति । ग्री॒वास्वे॒व य॒ज्ञस्य॒ शिरः॒ प्रति॑दधाति ।
त्रिः प्रवृ॑णक्ति । त्रय॑ इ॒मे लो॒काः । ए॒भ्य ए॒व लो॒केभ्यो॑ य॒ज्ञस्य॒ शिरोऽव॑रुन्धे । षट् थ्संप॑द्यन्ते । षड्वा
ऋ॒तवः॑ । (46)
80602
ऋ॒तुभ्य॑ ए॒व य॒ज्ञस्य॒ शिरोऽव॑रुन्धे । द्वाद॑श॒कृत्व॒ः प्रवृ॑णक्ति । द्वाद॑श॒ मासा॑स्सव्वँथ्स॒रः
। स॒व्वँ॒थ्स॒राद॒ेव य॒ज्ञस्य॒ शिरोऽव॑रुन्धे ।
चतु॑र्विᳲशति॒स्संप॑द्यन्ते । चतु॑र्विᳲशतिरर्द्धमा॒साः । अ॒र्द्ध॒मा॒सेभ्य॑ ए॒व य॒ज्ञस्य॒
शिरोऽव॑रुन्धे । अथो॒ खलु॑ । स॒कृदे॒व प्र॒वृज्य॑ः । एक॒ᳲ हि शिरः॑ । (47)
80603
अ॒ग्नि॒ष्टो॒मे प्रवृ॑णक्ति । ए॒ताव॒ान् वै य॒ज्ञः । याव॑ानग्निष्टो॒मः । याव॑ाने॒व य॒ज्ञः

। तस्य॒ शिर॒ः प्रति॑दधाति । नोक्थ्ये॑ प्रवृ॒ञ्ज्यात् ।
प्र॒जा वै प॒शव॑ उ॒क्थानि॑ । यदु॒क्थ्ये॑ प्रवृ॒ञ्ज्यात् । प्र॒जां प॒शून॑स्य॒ निर्द॑हेत् ।
वि॒श्व॒जिति॒ सर्व॑पृष्ठे प्रवृ॑णक्ति । (48)
80604
पृ॒ष्ठानि॒ वा अच्यु॑तञ्च्यावयन्ति । पृ॒ष्ठैरे॒वास्मा॒ अच्यु॑तञ्च्यावयि॒त्वाऽव॑रुन्धे । अप॑श्यङ्गो॒पामित्या॑ह
। प्रा॒णा वै गो॒पाः । प्रा॒णमे॒व
प्र॒जासु॒ विया॑तयति । अप॑श्यङ्गो॒पामित्या॑ह । अ॒सौ वा आ॑दि॒त्यो गो॒पाः । स हीमाः प्र॒जा गो॑पा॒यति॑
। तमे॒व प्र॒जानाँ॑ङ्गो॒प्तार॑ङ्कुरुते ।
अनि॑पद्यमान॒मित्या॑ह । (49)
80605
न ह्ये॑ष नि॒पद्य॑ते । आ च॒ परा॑ च प॒थिभि॒श्चर॑न्त॒मित्या॑ह । आ च॒ ह्ये॑ष परा॑ च प॒थिभि॒श्चर॑ति
। स स॒द्ध्रीची॒स्स विषू॑ची॒र्वसा॑न॒
इत्या॑ह । स॒द्ध्रीचीँ॑श्च॒ ह्ये॑ष विषू॑चीश्च॒ वसा॑नः प्र॒जा अ॒भि वि॒पश्य॑ति । आव॑रीवर्ति॒
भुव॑नेष्व॒न्तरित्या॑ह । आ ह्ये॑ष व॑री॒वर्ति॒ भुव॑नेष्व॒न्तः । अत्र॑
प्रावी॒र्मधु॒ माद्ध्वी॑भ्यां॒ मधु॒ माधू॑चीभ्या॒मित्या॑ह । वास॑न्तिकावे॒वास्मा॑ ऋ॒तू क॑ल्पयति । सम॒ग्निर॒ग्निना॑
ग॒तेत्या॑ह । (50)
80606
ग्रैष्मा॑वे॒वास्मा॑ ऋ॒तू क॑ल्पयति । सम॒ग्निर॒ग्निना॑ ग॒तेत्या॑ह । अ॒ग्निर्ह्ये॑वैषोँ॑ऽग्निना॑
स॒ङ्गच्छ॑ते । स्वाह॒ा सम॒ग्निस्तप॑सा ग॒तेत्या॑ह ।
पूर्व॑मे॒वादि॒तम् । उत्त॑रेणा॒भिगृ॑णाति । ध॒र्ता दि॒वो विभा॑सि॒ रज॑सः पृथि॒व्या इत्या॑ह । शा॒र॒दावे॒वास्मा॑
ऋ॒तू क॑ल्पयति । (51)
80607
दि॒वि दे॒वेषु॒ होत्रा॑ य॒च्छेत्या॑ह । होत्रा॑भिरे॒वेमाल्लो॒ँकान्थ्सन्द॑धाति । विश्वा॑सां भुवां
पत॒ इत्या॑ह । हैम॑न्तिकावे॒वास्मा॑ ऋ॒तू क॑ल्पयति ।
दे॒व॒श्रूस्त्वन्दे॑व घर्म दे॒वान्पा॒हीत्या॑ह । शै॒शि॒रावे॒वास्मा॑ ऋ॒तू क॑ल्पयति । त॒पो॒जाव्वाँ॑च॒म॒स्मे
निय॑च्छ देव॒ायुव॒मित्या॑ह । या वै मे॒द्ध्या॒ वाक् । सा
त॑पो॒जाः । ताम॒ेवाव॑रुन्धे । (52)
80608
गर्भो॑ दे॒वाना॒मित्या॑ह । गर्भो॒ ह्ये॑ष दे॒वाना॑म् । पि॒ता म॑ती॒नामित्या॑ह । प्र॒जा वै म॒तय॑ः
। तासा॑मे॒ष ए॒व पि॒ता । यत् प्र॑व॒र्ग्यः॑ ।
तस्मा॑दे॒वमा॑ह । पति॑ः प्र॒जाना॒मित्या॑ह । पति॒र्ह्ये॑ष प्र॒जाना॑म् । मति॑ः क॒वी॒नामित्या॑ह । (53)

80609
मतिर्ह्येष कवीनाम् । सन्देवो देवेन सवित्रा यतिष्ट सꣳ सूर्येणारुक्तेत्याह ।
अमुञ्चैवादित्यं प्रवर्ग्यञ्च सꣳशास्ति ।
आयुर्दास्त्वमस्मभ्यङ्घर्म वर्चोदा असीत्याह । आशिषमेवैतामाशास्ते । पिता नोऽसि
पिता नो बोधेत्याह । बोधयत्येवैनम् । न वै तेऽवकाशा
भवन्ति । पत्नियै दशमः । नव वै पुरुषे प्राणाः । (54)
80610
नाभिर्दशमी । प्राणानेव यजमाने दधाति । अथो दशाक्षरा विराट् । अन्नँव्विराट् ।
विराजैवान्नाद्यमवरुन्धे । यज्ञस्य
शिरोऽच्छिद्यत । तद्देवा होत्राभिः प्रत्यदधुः । ऋत्विजोऽवेक्षन्ते । एता वै होत्राः
। होत्राभिरेव यज्ञस्य शिरः प्रतिदधाति । (55)
80611
रुचितमवेक्षन्ते । रुचिताद्वै प्रजापतिः प्रजा असृजत । प्रजानाꣳ सृष्ट्यै । रुचितमवेक्षन्ते
। रुचिताद्वै पर्जन्यो वर्षति ।
वर्षुकः पर्जन्यो भवति । सं प्रजा एधन्ते । रुचितमवेक्षन्ते । रुचितं वै ब्रह्मवर्चसम्
। ब्रह्मवर्चसिनो भवन्ति । (56)
80612
अधीयन्तोऽवेक्षन्ते । सर्वमायुर्यन्ति । न पत्यवेक्षेत । यत्पन्त्यवेक्षेत । प्रजायेत
। प्रजान्त्वस्यै निर्दहेत् । यन्नावेक्षेत । न
प्रजायेत । नास्यै प्रजान्निर्दहेत् । तिरस्कृत्य यजुर्वाचयति । प्रजायते । नास्यै प्रजान्निर्दहति
। त्वष्टीमती ते सपेयेत्याह । सपाद्धि प्रजाः प्रजायन्ते ।। (57)
80600

ऋतवो हि शिरस्सर्वपृष्ठे प्रवृणक्त्यनिपद्यमानमित्याह गतेत्याह शारदावेवास्मा
ऋतू कल्पयति रुन्धे कवीनामित्याह प्राणाः प्रतिदधाति भवन्ति
वाचयति चत्वारि च ।।6।।
80701
देवस्य त्वा सवितुः प्रसव इति रशनामादत्ते प्रसूत्यै । अश्विनोर्बाहुभ्यामित्याह
। अश्विनौ हि देवानामद्ध्वर्यू आस्ताम् । पूष्णो
हस्ताभ्यामित्याह यत्यै । आददेऽदित्यै रास्नाऽसीत्याह यजुष्कृत्यै । इड एह्यदित
एहि सरस्वत्येहीत्याह । एतानि वा अस्यै देवनामानि ।
देवनामैरेवैनामा ह्वयति । असावेह्यसावेह्यसावेहीत्याह । एतानि वा अस्यै मनुष्यनामानि । (58)

80702
मनुष्यनामैरेवैनामा ह्वयति । षट्थ्संपद्यन्ते । षड्वा ऋतवः । ऋतुभिरेवैनामा ह्वयति । अदित्या उष्णीषमसीत्याह ।
यथायजुरेवैतत् । वायुरस्यैड इत्याह । वायुदेवत्यो वै वथ्सः । पूषा त्वोपावसृजत्वित्याह । पौष्णा वै देवतया पशवः । (59)
80703
स्वयैवैनन्देवतयोपावसृजति । अश्विभ्यां प्रदापयेत्याह । अश्विनौ वै देवानां भिषजौ । ताभ्यामेवास्मै भेषजङ्करोति । यस्ते
स्तनश्शशय इत्याह । स्तौत्येवैनाम् । उस्र घर्मः शिꣳषोस्र घर्मं पाहि घर्माय शिꣳषेत्याह । यथा ब्रूयादमुष्मै देहीति । तादृगेव तत् ।
बृहस्पतिस्त्वोपसीदत्वित्याह । (60)
80704
ब्रह्म वै देवानां बृहस्पतिः । ब्रह्मणैवैनामुपसीदति । दानवस्स्थ पेरव इत्याह । मेद्ध्यानेवैनाङ्करोति । विष्वग्वृतो लोहितेनेत्याह
व्यावृत्त्यै । अश्विभ्यां पिन्वस्व सरस्वत्यै पिन्वस्व पूष्णे पिन्वस्व बृहस्पतये पिन्वस्वेत्याह । एताभ्यो ह्येषा देवताभ्यः पिन्वते । इन्द्राय
पिन्वस्वेन्द्राय पिन्वस्वेत्याह । इन्द्रमेव भागधेयेन समर्द्धयति । द्विरिन्द्रायेत्याह । (61)
80705
तस्मादिन्द्रो देवतानां भूयिष्ठभाक्तमः । गायत्रोऽसि त्रैष्टुभोऽसि जागतमसीति शफोपयमानादत्ते । छन्दोभिरेवैनानादत्ते । सहोर्जो
भागेनोपमेहीत्याह । ऊर्ज एवैनं भागमकः । अश्विनौ वा एतद्यज्ञस्य शिरः प्रतिदधतावब्रूताम् । आवाभ्यामेव पूर्वाभ्याव्वँषट्क्रियाता इति ।
इन्द्राश्विना मधुनस्सारघस्येत्याह । अश्विभ्यामेव पूर्वाभ्याव्वँषट्करोति । अथो अश्विनावेव भागधेयेन समर्द्धयति । (62)
80706
घर्मं पात वसवो यजता वडित्याह । वसूनेव भागधेयेन समर्द्धयति । यद्वषट्कुर्यात् । यातयामाऽस्य वषट्कारः स्यात् । यन्न
वषट्कुर्यात् । रक्षाꣳसि यज्ञꣳ हन्युः । वडित्याह । परोक्षमेव वषट्करोति । नास्य यातयामा वषट्कारो भवति । न यज्ञꣳ रक्षाꣳसि घ्नन्ति । (63)
80707
स्वाहा त्वा सूर्यस्य रश्मये वृष्टिवनये जुहोमीत्याह । यो वा अस्य पुण्यो रश्मिः

। स वृ॒ष्टि॒वनिः । तस्मा॑ ए॒वैन॑ञ्जुहोति । मधु॑
ह॒विर॒सीत्या॑ह । स्व॒दय॑त्ये॒वैन॑म् । सूर्य॑स्य॒ तप॑स्त॒पेत्या॑ह । य॒था॒य॒जु॒रे॒वैतत्
। द्यावा॑पृथि॒वीभ्या॒न्त्वा॒ परि॑गृह्णामीत्या॑ह । द्यावा॑पृथि॒वीभ्या॑मे॒वैनं॒ परि॑गृह्णाति । (64)
90708 अ॒न्तरि॑क्षेण॒ त्वोप॑यच्छामीत्या॑ह । अ॒न्तरि॑क्षेणै॒वैन॒मुप॑यच्छति । न वा ए॒तं म॑नु॒ष्यो॑
भर्तु॑मर्हति । दे॒वाना॒न्त्वा पितृ॒णामनु॑मतो॒भर्तु॑ꣳ शकेय॒मित्या॑ह । दे॒वैरे॒वैनं॑ पि॒तृभि॒रनु॑मत॒
आद॑त्ते । वि वा ए॑नमे॒तद॑र्द्धयति । यत्प्र॒श्चाप्र॒वृज्य॑ पु॒रो जु॒ह्वति । तेजो॑ऽसि॒ तेजोऽनु॒
प्रेहीत्या॑ह । तेज॑
ए॒वास्मि॑न्दधाति । दि॒वि॒स्पृङ्मा मा॑ हिꣳसीरन्तरिक्ष॒स्पृङ्मा मा॑ हिꣳसीः पृथिवि॒स्पृङ्मा मा॑
हिꣳसी॒रित्या॒हाहिꣳसा॑यै । (65)
80709
सुव॑रसि॒ सुव॑र्मे यच्छ॒ दिव॑य्यँच्छ दि॒वो मा॑ पा॒हीत्या॑ह । आ॒शिष॑मे॒वैतामाशा॑स्ते । शिरो॒
वा ए॒तद्य॒ज्ञस्य॑ । यत्प्र॑व॒र्ग्यः॑ । आ॒त्मा
वा॒युः । उ॒द्यत्य॑ वातना॒मान्या॑ह । आ॒त्मन्ने॒व य॒ज्ञस्य॒ शिर॒ः प्रति॑दधाति । अन॑वानम् । प्रा॒णाना॒ꣳ
सन्त॑त्यै । पञ्चा॑ह । (66)
80710
पाङ्क्तो॑ य॒ज्ञः । यावा॑ने॒व य॒ज्ञः । तस्य॒ शिर॒ः प्रति॑दधाति । अ॒ग्नये॑ त्वा॒ वसु॑मते॒
स्वाहेत्या॑ह । अ॒सौ वा आ॑दि॒त्यो॑ऽग्निर्वसु॑मान् ।
तस्मा॑ ए॒वैन॑ञ्जुहोति । सोमा॑य त्वा रु॒द्रव॑ते॒ स्वाहेत्या॑ह । च॒न्द्रमा॒ वै सोमो॑ रु॒द्रवान्
। तस्मा॑ ए॒वैन॑ञ्जुहोति । वरु॑णाय त्वाऽऽदि॒त्यव॑ते॒ स्वाहेत्या॑ह । (67)
80711
अ॒प्सु वै वरु॑ण आदि॒त्यवान् । तस्मा॑ ए॒वैन॑ञ्जुहोति । बृह॒स्पत॑ये त्वा वि॒श्वदे॑व्यावते॒
स्वाहेत्या॑ह । ब्रह्म॒ वै दे॒वानां॒ बृह॒स्पतिः॑ ।
ब्रह्म॑णै॒वैन॑ञ्जुहोति । स॒वि॒त्रे त्व॑र्भु॒मते॑ विभु॒मते॑ प्रभु॒मते॒ वाज॑वते॒ स्वाहेत्या॑ह
। स॒व्वँ॒थ्स॒रो वै स॑वि॒तर्भु॒मान् वि॑भु॒मान्प्र॑भु॒मान् वाज॑वान् । तस्मा॑
ए॒वैन॑ञ्जुहोति । य॒माय॒ त्वाऽङ्गि॑रस्वते पितृ॒मते॒ स्वाहेत्या॑ह । प्रा॒णो वै य॒मोऽङ्गि॑रस्वान्पितृ॒मान् । (68)
80712
तस्मा॑ ए॒वैन॑ञ्जुहोति । ए॒ताभ्य॑ ए॒वैन॑न्दे॒वता॑भ्यो जुहोति । दश॒ संप॑द्यन्ते । दशा॑क्षरा
वि॒राट् । अन्न॑व्वि॒राट् । वि॒राजै॒वान्नाद्य॒मव॑रुन्धे ।
रौ॒हि॒णाभ्या॒व्वैँ दे॒वास्सु॑व॒र्गल्लो॒कमा॑यन्न् । तद्रौ॑हि॒णयो॑ रौहिण॒त्वम् । यद्रौ॑हि॒णौ
भव॑तः । रौ॒हि॒णाभ्या॑मे॒व तद्यज॑मानस्सुव॒र्गल्लो॒कमे॑ति । अह॒र्ज्योतिः॑
के॒तुना॑ जुषताꣳ सु॒ज्यो॒तिर्ज्योति॑षा॒ꣳ स्वाहा॒ रात्रि॒र्ज्योतिः॑ के॒तुना॑ जुषताꣳ सु॒ज्यो॒तिर्ज्योति॑षा॒ꣳ

स्वाहेत्या॑ह । आ॒दि॒त्यमे॒व त॒दमु॒ष्मि॑ल्लो॒ँके॑ऽह्ना॑ पु॒रस्ता॑द्दाधार ।
रात्रि॑या अ॒वस्ता॑त् । तस्मा॑द॒सावा॑दि॒त्यो॑ऽमुष्मि॑ल्लो॒ँके॑ऽहोरा॒त्राभ्या॒न्धृ॒तः ।। (69)
80700

म॒नु॒ष्य॒न॒मानि॑ प॒शव॑स्सीद॒त्वित्या॒हेन्द्रा॒येत्या॑हार्द्धयति घ्नन्ति गृह्णा॒त्यहि॑ꣳसायै॒
पञ्चा॑ऽहादि॒त्यव॑ते॒ स्वाहेत्या॑ह पितृ॒माने॑ति च॒त्वारि॑ च ।7।
80801
विश्वा॒ आशा॑ दक्षिण॒सदित्या॑ह । विश्वा॑ने॒व दे॒वान्प्री॑णाति । अथो॒ दुरि॑ष्ट्या ए॒वैनं॑ पाति
। विश्वा॒न्दे॒वान॑याडि॒हेत्या॑ह । विश्वा॑ने॒व
दे॒वान्भा॑ग॒धेये॑न॒ सम॑र्द्धयति । स्वाहा॑कृतस्य॒ घ॒र्मस्य॒ मधोः॑ पिबतमश्वि॒नेत्या॑ह । अ॒श्विना॑वे॒व
भा॑ग॒धेये॑न॒ सम॑र्द्धयति । स्वाहा॒ऽग्नये॑ य॒ज्ञिया॑य॒
शय्यँर्जु॒र्भि॒रित्या॑ह । अ॒भ्ये॑वैन॑ङ्गारयति । अथो॑ ह॒वि॒रे॒वाकः॑ । (70)
80802
अश्वि॑ना घ॒र्मं पा॑तꣳ हार्दि॑वा॒नमह॑र्दि॒वाभि॑रू॒तिभि॒रित्या॑ह । अ॒श्विना॑वे॒व भा॑ग॒धेये॑न॒
सम॑र्द्धयति । अनु॑ वा॒न्द्यावा॑पृथि॒वी
मꣳसाता॒मित्या॒हानु॑मत्यै । स्वाहेन्द्रा॑य॒ स्वाहेन्द्रा॒वडित्या॑ह । इन्द्रा॑य॒ हि पु॒रो
हू॒यते॑ । आ॒श्राव्या॑ह घ॒र्मस्य॑ य॒जेति॑ । वष॑ट्कृते जुहोति । रक्ष॑सा॒मप॑हत्यै ।
अनु॑यजति स्व॒गाकृ॑त्यै । घ॒र्मम॑पातमश्वि॒नेत्या॑ह । (71)
80803
पूर्व॑मे॒वोदि॒तम् । उत्त॑रेणा॒भिगृ॑णाति । अनु॑वा॒न्द्यावा॑पृथि॒वी अ॑मꣳसाता॒मित्या॒हानु॑मत्यै
। तं प्रा॒व्यय्यँथा॒वण्णमो॑ दि॒वे नमः॑ पृथि॒व्या
इत्या॑ह । य॒था॒यजु॒रे॒वैतत् । दि॒विधा॑ इ॒मय्यँ॒ज्ञय्यँ॒ज्ञमि॒मन्दि॒विधा॒ इत्या॑ह । सु॒व॒र्गमे॒वैन॑ल्लो॒ँकङ्ग॑मयति
। दिव॑ङ्गच्छा॒न्तरि॑क्षङ्गच्छ पृथि॒वीङ्ग॒च्छेत्या॑ह ।
ए॒ष्वे॑वैन॑ल्लो॒ँकेषु॒ प्रति॑ष्ठापयति । पञ्च॑ प्र॒दिशो॑ ग॒च्छेत्या॑ह । (72)
80804
दि॒क्ष्वे॑वैनं॒ प्रति॑ष्ठापयति । दे॒वान्घ॑र्म॒पान॑च्छ पि॒तॄन्घ॑र्म॒पान॒च्छेत्या॑ह ।
उ॒भये॑ष्वे॒वैनं॒ प्रति॑ष्ठापयति । यत्पिन्व॑ते । व॒र्षुकः॑ प॒र्जन्यो॑
भवति । तस्मा॒त्पिन्व॑मान॒ः पुण्यः॑ । यत्प्राङ्पिन्व॑ते । तद्दे॒वाना॑म् । यद्द॑क्षि॒णा । तत्पि॑तॄ॒णाम् । (73)
80805
यत्प्र॒त्यक् । तन्म॑नु॒ष्या॑णाम् । यदु॒दङ् । तद्रु॒द्राणा॑म् । प्राञ्च॒मुद॑ञ्चं पिन्वयति ।
दे॒व॒त्राकः॑ । अथो॒ खलु॑ । सर्वा॒ अनु॒ दिशः॑
पिन्वयति । सर्वा॒ दिश॒स्सम॑धन्ते । अ॒न्तःप॒रि॒धि पि॑न्वयति । (74)

80806
तेज॒सोऽस्क॑न्दाय । इ॒षे पीपि॑ह्यू॒र्जे पी॑पि॒हीत्या॑ह । इष॑मे॒वोर्ज॒य्यँज॑माने दधाति । यज॑मानाय
पीपि॒हीत्या॑ह । यज॑मानायै॒वैता॑मा॒शिष॒मा
शा॑स्ते । मह्य॒ञ्ज्यैष्ठ्या॑य पीपि॒हीत्या॑ह । आ॒त्मन॑ ए॒वैता॑मा॒शिष॒माशा॑स्ते । त्विष्यै॑
त्वा द्यु॒म्नाय॑ त्वेन्द्रि॒याय॑ त्वा॒ भूत्यै॒ त्वेत्या॑ह । य॒था॒य॒जु॒रे॒वैतत् । धर्मा॑सि
सु॒धर्मा मे॑न्य॒स्मे ब्रह्मा॑णि धा॒रयेत्या॑ह । (75)
80807
ब्रह्म॑न्ने॒वैनं॒ प्रति॑ष्ठापयति । नेत्त्वा॒ वात॑स्स्क॒न्दया॒दिति॒ यद्य॑भि॒चरे॑त् । अ॒मुष्य॑
त्वा प्रा॒णे सा॑दयाम्य॒मुना॑ स॒ह नि॑र॒र्थङ्ग॒च्छेति॑
ब्रूया॒द्यन्द्वि॒ष्यात् । यमे॒व द्वेष्टि॑ । तेनै॑नꣳ स॒ह नि॑र॒र्थङ्ग॑मयति । पू॒ष्णे शर॑से॒
स्वाहेत्या॑ह । या ए॒व दे॒वता॑ हु॒तभा॑गाः । ताभ्य॑ ए॒वैन॑ञ्जुहोति । ग्राव॑भ्य॒ः
स्वाहेत्या॑ह । या ए॒वान्तरि॑क्षे॒ वाच॑ः । (76)
80808
ताभ्य॑ ए॒वैन॑ञ्जुहोति । प्र॒ति॒रेभ्य॒स्स्वाहेत्या॑ह । प्रा॒णा वै दे॒वाः प्र॑ति॒राः । तेभ्य॑
ए॒वैन॑ञ्जुहोति । द्यावा॑पृथि॒वीभ्या॒ꣳ स्वाहेत्या॑ह ।
द्यावा॑पृथि॒वीभ्या॑मे॒वैन॑ञ्जुहोति । पि॒तृभ्यो॑ घर्म॒पेभ्य॒ः स्वाहेत्या॑ह । ये वै यज्वा॑नः
। ते पि॒तरो॑ घर्म॒पाः । तेभ्य॑ ए॒वैन॑ञ्जुहोति । (77)
80809
रु॒द्राय॑ रु॒द्रहो॑त्रे॒ स्वाहेत्या॑ह । रु॒द्रमे॒व भा॑ग॒धेये॑न॒ सम॑र्द्धयति । स॒र्वत॒स्सम॑नक्ति
। स॒र्वत॑ ए॒व रु॒द्रन्नि॒रव॑दयते । उद॑ञ्च॒न्निर॑स्यति ।
ए॒षा वै रु॒द्रस्य॒ दिक् । स्वाया॑मे॒व दि॒शि रु॒द्रन्नि॒रव॑दयते । अ॒प उप॑स्पृशति मेद्ध्य॒त्वाय॑ । नान्वी॑क्षेत ।
यद॒न्वीक्षे॑त । (78)
80810
चक्षु॑रस्य प्र॒माय॑ुक स्यात् । तस्मा॒न्नान्वीक्ष्य॑ः । अपी॑प॒रो माऽह्नो॒ रात्रि॑यै मा पाह्ये॒षा
ते॑ अग्ने स॒मित्तया॒ समि॑द्ध्य॒स्वायु॑र्मे दा॒ वर्च॑सा
माञ्जी॒रित्या॑ह । आयु॑रे॒वास्मि॒न्वर्चो॑ दधाति । अपी॑परो म॒ा रात्रि॑या॒ अह्नो॑ मा पाह्ये॒षा
ते॑ अग्ने स॒मित्तया॒ समि॑द्ध्य॒स्वायु॑र्मे दा॒ वर्च॑सा माञ्जी॒रित्या॑ह ।
आयु॑रे॒वास्मि॒न्वर्चो॑ दधाति । अ॒ग्निर्ज्योति॒र्ज्योति॑र॒ग्निस्स्वाहा॒ सूर्यो॒ ज्योति॒र्ज्योति॒स्सूर्य॒स्स्वाहेत्या॑ह
। य॒था॒य॒जु॒रे॒वैतत् । ब्र॒ह्म॒वा॒दिनो॑ वदन्ति ।
हो॒त॒व्य॑मग्निहो॒त्रा (3) न्न हो॑त॒व्या (3) मिति॑ । (79)
80811

यद्यजु॑षा जु॒हु॒यात् । अय॑थापूर्व॒माहु॑ती जुहु॒यात् । यन्न जु॑हु॒यात् । अ॒ग्निः परा॑भवेत् । भूस्स्वाहेत्ये॒व
हो॑त॒व्य॑ँम् । य॒था॒पू॒र्वमाहु॑ती
जु॒होति॑ । नाग्निः परा॑भवति । हु॒तꣳ ह॒विर्मधु॑ ह॒विरित्या॑ह । स्व॒दय॑त्ये॒वैन॑ँम् । इन्द्र॑तमे॒ऽग्नावित्या॑ह ।
(80)
80812
प्रा॒णो वा इन्द्र॑तमो॒ऽग्निः । प्रा॒ण ए॒वैन॒मिन्द्र॑तमे॒ऽग्नौ जु॑होति । पि॒ता नो॑ऽसि॒
मा मा॑ हिꣳसी॒रित्या॒हाहिꣳ॑सायै । अ॒श्याम॑ ते देव घर्म॒
मधु॑मतो॒ वाज॑वतः पितु॒मत॒ इत्या॑ह । आ॒शिष॑मे॒वैतामाशा॑स्ते । स्व॒धा॒विनो॑ऽशी॒महि॑ त्वा॒
मा मा॑ हिꣳसी॒रित्या॒हाहिꣳ॑सायै । तेज॑सा॒ वा ए॒ते व्यृ॑द्ध्यन्ते ।
ये प्र॑व॒र्ग्ये॑ण॒ चर॑न्ति । प्राश्ञ॑न्ति । तेज॑ ए॒वात्मन्द॑धते । (81)
80813
स॒व्व॒ँथ्स॒रन्न मा॒ꣳसम॑श्ञीयात् । न रा॒मामुपे॑यात् । न मृ॒न्मये॑न पिबेत् । नास्य॑ रा॒म उच्छि॑ष्टं पिबेत् ।
तेज ए॒व तथ्सश्य॑ति ।
दे॒वा॒सु॒रास्सय्य॑ँत्ता आसन्न् । ते दे॒वा वि॑ज॒यमु॑प॒यन्त॑ः । वि॒भ्राजि॑ सौ॒र्ये ब्रह्म॒सन्न्य॑दधत
। यत्किञ्च॑ दिवाकी॒र्त्य॑ँम् । तदे॒तेनै॒व व्र॒तेना॑गोपायत् ।
तस्मा॑दे॒तद्व्रतञ्चा॒र्य॑ँम् । तेज॑सो गोपी॒थाय॑ । तस्मा॑दे॒तानि॒ यजू॑ꣳषि वि॒भ्राज॑स्सौ॒र्यस्येत्या॑हुः
। स्वाहा॑ त्वा॒ सूर्य॑स्य र॒श्मिभ्य॒ इति॑ प्रा॒तस्सꣳसा॑दयति ।
स्वाहा॑ त्वा॒ नक्ष॑त्रेभ्य॒ इति॑ सा॒यम् । ए॒ता वा ए॒तस्य॑ दे॒वता॑ः । ताभि॑रे॒वैन॒ꣳ सम॑र्द्धयति ।। (82)
अ॒कु॒र॒श्वि॒नेत्या॑ह प्र॒दिशो॑ ग॒च्छेत्या॑ह पितृ॒णाम॑न्तःपरि॒धि पि॑न्वयति धार॒येत्या॑ह॒
वाचो॑ घर्म॒पास्तेभ्य॑ ए॒वैन॑ञ्जुहोत्य॒न्वीक्षे॑त होत॒व्या (3)
80800
मित्य॒ग्नावित्या॑ह
दधतेऽगोपायथ्स॒प्त च॑ ।।8।।
80901
घर्म या ते दिविशुगिति तिस्र आहुतीर्जुहोति । छन्दोभिरेवास्यैभ्यो लोकेभ्यश्शुचमवयजते ।
अनुनोऽद्यानुमतिरित्याहानुमत्यै ।
दिवस्त्वा परस्पाया इत्याह । दिवएमेमाल्लोकान्दाधार । ब्रह्मणस्त्वा परस्त्वाया इत्याह । (83)
80902
एष्वेव लोकेषु प्रजा दाधार । प्राणस्य त्वा परस्पाया इत्याह । प्रजास्वेव प्राणान्दाधार । शिरो वा
एतद्यज्ञस्य । यत्प्रवर्ग्यः ।
असौ खलु वा आदित्यः प्रवर्ग्यः । तय्यँद्दक्षिणा प्रत्यञ्चमुदञ्चमुद्वासयेत् । जिह्मय्यँज्ञस्य शिरो हरेत् ।

प्राञ्चमुद्वासयति । पुरस्तादेव यज्ञस्य शिरः
प्रतिदधाति । (84)
80903
प्राञ्चमुद्वासयति । तस्मादसावादित्यः पुरस्तादुदेति । शफोपयमान्धवित्राणि धृष्टी इत्यन्ववहरन्ति ।
सात्मानमेवैनँ सतनुङ्करोति ।
सात्माऽमुष्मिल्लोँके भवति । य एवव्वेँद । औदुंबराणि भवन्ति । ऊर्ग्वा उदुम्बरः । ऊर्जमेवावरुन्धे
। वर्त्मना वा अन्वित्य । (85)
80904
यज्ञँ रक्षाँसि जिघाँसन्ति । साम्ना प्रस्तोताऽन्ववैति । साम वै रक्षोहा । रक्षसामपहत्यै ।
त्रिर्निधनमुपैति । त्रय इमे लोकाः ।
एभ्य एव लोकेभ्यो रक्षाँस्यपहन्ति । पुरुषःपुरुषो निधनमुपैति । पुरुषःपुरुषो हि रक्षस्वी ।
रक्षसामपहत्यै । (86)
80905
यत्पृथिव्यामुद्वासयेत् । पृथिवीँ शुचाऽर्पयेत् । यदप्सु । अपश्शुचार्पयेत् । यदोषधीषु ।
ओषधीश्शुचाऽर्पयेत् । यद्वनस्पतिषु ।
वनस्पतीञ्छुचार्पयेत् । हिरण्यन्निधायोद्वासयति । अमृतव्वैँ हिरण्यम् । (87)
80906
अमृत एवैनं प्रतिष्ठापयति । वल्गुरसि शय्युँधाया इति त्रिः परिषिञ्चन्पर्येति । त्रिवृद्वा अग्निः ।
यावानेवाग्निः । तस्य शुचँ
शमयति । त्रिः पुनः पर्येति । षट्थ्संपद्यन्ते । षड्वा ऋतवः । ऋतुभिरेवास्य शुचँ शमयति ।
चतुस्स्रक्तिर्नाभिर्ऋतस्येत्याह । (88)
80907
इयव्वाँ ऋतम् । तस्या एष एव नाभिः । यत् प्रवर्ग्यः । तस्मादेवमाह । सदो विश्वायुरित्याह । सदो
हीयम् । अप द्वेषो अप
ह्वर इत्याह भ्रातृव्यापनुत्त्यै । घर्मैतत्तेऽन्नमेतत्पुरीषमिति दद्ध्ना मधुमिश्रेण पूरयति । ऊर्ग्वा
अन्नाद्यन्दधि
। ऊर्जैवैनमन्नाद्येन समर्द्धयति । (89)
80908
अनशनायुको भवति । य एवव्वेँद । रन्तिर्नामासि दिव्यो गन्धर्व इत्याह । रूपमेवास्यैतन्महिमानँ
रन्तिं बन्धुताव्व्याँचष्टे ।
समहमायुषा सं प्राणेनेत्याह । आशिषमेवैतामाशास्ते । व्यसौ योऽ स्मान्द्वेष्टि यञ्च वयन्द्विष्म इत्याह
। अभिचार एवास्यैषः । अचिक्रदद्वृषा

हरिरित्याह । वृषा ह्येषः । (90)
80909
वृषा हरिः । महान्मित्रो न दर्शत इत्याह । स्तौत्येवैनमेतत् । चिदसि समुद्रयोनिरित्याह ।
स्वामेवैनय्योँनिङ्गमयति । नमस्ते
अस्तु मा मा हिँसीरित्याहाहिँसायै । विश्वावसुँ सोम गन्धर्वमित्याह । यदेवास्य क्रियमाँस्यान्तर्यन्ति ।
तदेवास्यैतेनाप्याययति । विश्वावसुरभि
तन्नो गृणात्वित्याह । (91)
80910
पूर्वमेवोदितम् । उत्तरेणाभिगृणाति । धियो हिन्वानो धिय इन्नो अव्यादित्याह । ऋतूनेवास्मै
कल्पयति । प्रासाङ्गन्धर्वो
अमृतानि वोचदित्याह । प्राणा वा अमृताः । प्राणानेवास्मै कल्पयति । एतत्त्वन्देव घर्म देवो
देवानुपागा इत्याह । देवो ह्येष सन्देवानुपैति ।
इदमहं मनुष्यो मनुष्यानित्याह । (92)
80911
म॒नु॒ष्यो॑ हि । ए॒ष सन्म॑नु॒ष्या॑नु॒पैति॑ । ई॒श्व॒रो वै प्र॑व॒र्ग्य॑मुद्वासयन्न् ।
प्र॒जां प॒शून्थ्सो॑मपी॒थम॑नूद्वास॒स्सोम॑ पी॒थानु॒मेहि॑ । स॒ह प्र॒जया॑
स॒ह रा॒यस्पोषे॒णेत्या॑ह । प्र॒जाम॒ेव प॒शून्थ्सो॑मपी॒थमा॒त्मन्ध॑त्ते । सु॒मि॒त्रा न॒ आप॒
ओष॑धयस्स॒न्त्वित्या॑ह । आ॒शिष॑मे॒वैतामाशा॑स्ते । दु॒र्मि॒त्रास्तस्मै॑
भूयासु॒र्यो॑ऽस्मान्द्वेष्टि॒ यञ्च॑ व॒यन्द्वि॒ष्म इत्या॑ह । अ॒भि॒चा॒र ए॒वास्यै॒षः । प्र वा
ए॒षो॑ऽस्माल्लो॒काच्च्य॑वते । यः प्र॑व॒र्ग्य॑मु॒द्वासयति॑ । उदु॒त्यञ्चि॒त्रमिति॑
सौ॒रीभ्या॑मृ॒ग्भ्यां पु॒नरेत्य॒ गार्ह॑पत्ये जुहोति । अ॒यव्वैँ ल॒ोको गार्ह॑पत्यः । अ॒स्मिन्ने॒व
ल॒ोके प्रति॑तिष्ठति । अ॒सौ खल॒ु वा आ॑दि॒त्यस्सु॑व॒र्गो
ल॒ोकः । यथ्सौ॒री भव॑तः । तेने॒व सु॑व॒र्गाल्लो॒कान्नैति॑ ।। (93)
80900

ब्रह्म॑णस्त्वा प॒रस्पाया॒ इत्या॑ह दधात्य॒न्वित्य॑ रक्ष॒स्वी रक्ष॑सा॒मप॑हत्यै॒ वै हिर॑ण्यमाहार्द्धयति॒
ह्येष गृ॑णा॒त्वित्या॑ह मनु॒ष्या॑नित्या॑हास्यै॒षो॑ऽष्टौ च॑ ।।9।।
81001
प्र॒जाप॑ति॒र्व्वैँ दे॒वाश्शु॒क्रं पयो॑ऽदुह्रन् । तदे॑भ्यो॒ न व्य॑भवत् । तद॒ग्निर्व्य॑करोत्
। ताि॒नि शु॒क्रियाणि॒ सामा॑न्यभवन्न् । तेषा॒य्यो॑
रस॒ोऽत्यक्ष॑रत् । तानि॑ शुक्रय॒जूंष्य॑भवन्न् । शुक्रियाणा॒व्वाँ ए॒तानि॒ शुक्रियाणि । सा॒म॒प॒य॒सव्वाँ
ए॒तयो॑र॒न्यत् । दे॒वाना॑म॒न्यत्पय॑ः । यद्गोः पय॑ः । (94)

81002
तथ्साम्नः पयः । यदजायै पयः । तद्देवानां पयः । तस्माद्यत्रैतैर्यजुर्भिश्चरन्ति
। तत्पयसा चरन्ति । प्रजापतिमेव तत्पयसाऽन्नाद्येन
समर्द्धयन्ति । एष ह त्वै साक्षात्प्रवर्ग्यं भक्षयति । यस्यैवव्विदुषः प्रवर्ग्यः
प्रवृज्यते । उत्तरवेद्यामुद्वासयेत्तेजस्कामस्य । तेजो वा उत्तरवेदिः । (95)
81003
तेजः प्रवर्ग्यः । तेजसैव तेजस्समर्द्धयति । उत्तरवेद्यामुद्वासयेदन्नकामस्य
। शिरो वा एतद्यज्ञस्य । यत्प्रवर्ग्यः । मुखमुत्तरवेदिः ।
शीर्ष्णैव मुखꣳ सन्दधात्यन्नाद्याय । अन्नाद एव भवति । यत्र खलु वा एतमुद्वासितव्वँयाꣳसि
पर्यासते । परि वै ताꣳ समाः प्रजा वयाꣳस्यासते । (96)
81004
तस्मादुत्तरवेद्यामेवोद्वासयेत् । प्रजानाङ्गोपीथाय । पुरो वा पश्चाद्वोद्वासयेत्
। पुरस्ताद्वा एतज्ज्योतिरुदेति । तत्पश्चान्निम्रोचति ।
स्वामेवैनय्योँनिमनूद्वासयति । अपां मद्ध्य उद्वासयेत् । अपाव्वाँ एतन्मद्ध्याज्ज्योतिरजायत
। ज्योतिः प्रवर्ग्यः । स्वयैवैनय्योँनौ प्रतिष्ठापयति । (97)
81005
यन्द्विष्यात् । यत्र स स्यात् । तस्यान्दिश्युद्वासयेत् । एष वा अग्निर्वैश्वानरः । यत्प्रवर्ग्यः
। अग्निनैवैनव्वैँश्वानरेणाभि
प्रवर्तयति । औदुम्बर्याꣳ शाखायामुद्वासयेत् । ऊर्ग्वा उदुंबरः । अन्नं प्राणः । शुग्घर्मः । (98)
81006
इदमहममुष्यामुष्यायणस्य शुचा प्राणमपि दहामीत्याह । शुचैवास्य प्राणमपि दहति ।
ताजगार्तिमाच्छति । यत्र दर्भा
उपदीकसन्ततास्स्युः । तदुद्वासयेद्वृष्टिकामस्य । एता वा अपामनूज्झावर्यो नाम
। यद्दर्भाः । असौ खलु वा आदित्य इतो वृष्टिमुदीरयति ।
असावेवास्मा आदित्यो वृष्टिन्नियच्छति । ता आपो नियता धन्वना यन्ति ।। (99)
81000

गोः पय उत्तरवेदिरासते स्थापयति घर्मो यन्ति ।।10।।
81101
प्रजापतिस्संभ्रियमाणः । सम्राट्थ्संभृतः । घर्मः प्रवृक्तः । महावीर उद्वासितः
। असौ खलु वावैष आदित्यः । यत्प्रवर्ग्यः ।
स एतानि नामान्यकुरुत । य एवव्वेँद । विदुरेनन्नाम्ना । ब्रह्मवादिनो वदन्ति । (100)

81102
यो वै वसी॑याꣳसय्यँथाना॒मम॑मु॒प॒च॑रति । पुण्या॑ति॒व्वँ स तस्मै॑ कामयते । पुण्या॑तिमस्मै कामयन्ते
। य ए॒वव्वेँद॑ । तस्मा॑दे॒वव्वि॒द्वान् ।
घ॒र्म इति॒ दिवाऽऽच॑क्षीत । स॒म्राडिति॒ नक्त॑म् । ए॒ते वा ए॒तस्य॑ प्रि॒ये त॒नुवौ॑ । ए॒ते
अ॑स्य प्रि॒ये नाम॑नी । प्रि॒यया॒वैन॑न्त॒नुवा॑ । (101)
81103
प्रि॒येण॒ नाम्ना॒ सम॑र्द्धयति । की॒र्तिर॑स्य॒ पूर्वा॑गच्छति ज॒नता॑माय॒तः । गा॒य॒त्री दे॒वेभ्योऽपा॑क्रामत्
ा॒भिगृ॑णाति । तान्दे॒वाः प्र॑व॒र्ग्ये॑णै॒वानु॒
व्य॑भवन्न् । प्र॒व॒र्ग्ये॑णाप्नु॒वन्न् । यच्च॑तु॒र्विꣳशति॒कृत्व॑ः प्रव॒र्ग्यं॑ प्रवृ॒णक्ति॑
। गा॒य॒त्रीमे॒व तदनु॒ विभ॑वति । गा॒य॒त्रीमा॑प्नोति । पूर्वा॑ऽस्य॒ जन॑य्यँ॒तः
की॒र्तिर्ग॑च्छति । वै॒श्व॒दे॒वः सꣳस॑न्नः । (102)
81104
वस॑व॒ः प्रवृ॑क्तः । सोमो॑ऽभिकी॒र्यमा॑णः । आ॒श्वि॒नः पय॑स्यानी॒यमा॑ने । मा॒रु॒तः क्वथन्न् । पौ॒ष्ण उद॑न्तः
। सा॒र॒स्व॒तो
वि॒ष्यन्द॑मानः । मै॒त्रश्शरो॑ गृही॒तः । तेज॒ उद्य॑तः । वा॒युर्ह्रि॒यमा॑णः । प्र॒जाप॑तिर्हू॒यमा॑नः । (103)
81105
वाग्घु॒तः । अ॒सौ खलु॒ वावैष आ॑दि॒त्यः । यत्प्र॑व॒र्ग्यः॑ । स ए॒तानि॒ नामा॑न्यकुरुत । य ए॒वव्वेँद॑ ।
वि॒दुरे॑न॒न्नाम्ना॑ ।
ब्र॒ह्म॒वा॒दिनो॑ वदन्ति । यन्मृ॒न्मय॒माहु॑ति॒न्नाश्नु॒तेऽथ॑ । कस्मा॑दे॒षो॑ऽश्नु॒त॒ इति॑ । वाग॒ेष इति॑ ब्रूयात् ।
(104)
81106
वा॒च्यैव वाच॑न्दधाति । तस्मा॑दश्नुते । प्र॒जाप॑ति॒र्वा ए॒ष द्वा॑दश॒धा विहि॑तः । यत्प्र॑व॒र्ग्यः॑
। यत्प्रा॒ग॑वका॒शेभ्य॑ः । तेन॑ प्र॒जा
अ॑सृजत । अ॒व॒का॒शैर्दे॑वासु॒रान॑सृजत । यदू॒र्द्ध्वम॑वका॒शेभ्य॑ः । तेनान्न॑मसृजत । अन्न॑
प्र॒जाप॑तिः । प्र॒जाप॑ति॒र्वावैषः ।। (105)
81100

व॒द॒न्ति॒ त॒नुवा॒ सꣳस॑न्नो हू॒यमा॑नो ब्रू॒याद॒न्नं॑ प्र॒जाप॑ति॒रेक॑ञ्च ।।11।।
81201
स॒वि॒ता भू॒त्वा प्र॑थ॒मेऽह॒न्प्रवृ॑ज्यते । तेन॒ कामाꣳ॑ एति । यद्द्वि॒तीयेऽह॑न्प्रवृ॒ज्यते॑
। अ॒ग्निर्भू॒त्वा दे॒वाने॑ति । यत्तृ॒तीयेऽह॑न्प्रवृ॒ज्यते॑ ।
वा॒युर्भू॒त्वा प्रा॒णाने॑ति । यच्च॑तु॒र्थेऽह॑न्प्रवृ॒ज्यते॑ । आ॒दि॒त्यो भू॒त्वा र॒श्मीने॑ति

। यत्प॑ञ्च॒मेऽह॑न्प्रवृ॒ज्यते᳚ । च॒न्द्रमा॑ भू॒त्वा नक्ष॑त्राण्येति । (106)
81202
यथ्ष॒ष्ठेऽह॑न्प्रवृ॒ज्यते᳚ । ऋ॒तुर्भू॒त्वा सं॑वँथ्स॒रमे॑ति । यथ्स॑प्त॒मेऽह॑न्प्रवृ॒ज्यते᳚
। धा॒ता भू॒त्वा शक्क॑रीमेति । यद॑ष्ट॒मेऽह॑न्प्रवृ॒ज्यते᳚ ।
बृ॒हस्पति॑र्भू॒त्वा गा॑य॒त्रीमे॑ति । यन्न॑व॒मेऽह॑न्प्रवृ॒ज्यते᳚ । मि॒त्रो भू॒त्वा त्रि॒वृत॑
इ॒माल्लो॒ँकाने॑ति । यद्द॑श॒मेऽह॑न्प्रवृ॒ज्यते᳚ । वरु॑णो भू॒त्वा वि॒राज॑मेति । (107)
81203
यदे॑काद॒शेऽह॑न्प्रवृ॒ज्यते᳚ । इन्द्रो॑ भू॒त्वा त्रि॒ष्टुभ॑मेति । यद्द्वा॑द॒शेऽह॑न्प्रवृ॒ज्यते᳚
। सोमो॑ भू॒त्वा सु॒त्यामे॑ति । यत्पु॒रस्ता॑दुप॒सदा᳚ प्रवृ॒ज्यते᳚ ।
तस्मा॑दि॒तः परा॑ङ॒मूल्लो॒ँकाꣳ स्तप॑न्नेति । यदु॒परि॑ष्टादुप॒सदा᳚ प्रवृ॒ज्यते᳚ । तस्मा॑द॒मुतो॒ऽर्वाङि॒माल्लो॒ँकाꣳ
स्तप॑न्नेति । य ए॒वव्ँवेद॑ । ऐव त॑पति ।। (108)
नक्ष॑त्राण्येति वि॒राज॑मेति तपति ।।12।।
दे॒वा वै स॒त्रꣳ सा॑वि॒त्रं परि॑श्रिते॒ ब्रह्म॒न् प्रच॑रिष्यामो॒ऽग्निष्ट्वा शिरो᳚ ग्री॒वा
दे॒वस्य॑ रश॒नाव्ँविश्वा॒ आशा॒ घर्म॒ या ते᳚ प्र॒जाप॑ति शु॒क्रं
प्र॒जाप॑तिस्सँभ्रि॒यमा॑णस्सवि॒ता भू॒त्वा द्वाद॑श ।।12।।
दे॒वा वै स॒त्रꣳ स ख॑दि॒रः परि॑श्रितेऽभिपू॒र्वमथो॒ रक्ष॑सा॒ङ्ग्रैष्मा॑वे॒वास्मै॒ ब्रह्म॒
वै दे॒वाना॒मश्वि॑ना घ॒र्मं पा॑तं प्रा॒णो वै वृषा॒ हरि॒र्यो वै
वसी॑याꣳसय्यँथाना॒मम॒ष्टोत्त॑रशतम् ।।108।।
81200

दे॒वा वै स॒त्रमैव त॑पति ।। ओम् शान्तिश्शान्तिश्शान्तिः ।।
हरिः ओम् । श्रीकृष्णार्पणमस्तु ।।